वन्दे सोमसुतं गुरोर्मम गुरुं तं रामनामास्पदं
बुद्धिर्यस्य निरन्तरं कृतधियो ब्रह्मण्यभून्निर्गुणे ॥
नारायणाख्यौ रामाख्यौ वासुदेवाह्वयौ तथा ।
यौ कृष्णनीलकण्ठाख्यौ गुरूनेतान् नमाम्यहम् ॥
यन्मानसोदयगिरेरुदितः श्रुतिभास्करः ।
कौषितकमुनीन्द्रं च तच्छिष्यांश्च नमाम्यहम् ॥
मीमांसावज्रसंविद्धश्रुत्यर्थमणयोऽमलाः ।
भान्ति यत्सूत्रसंप्रोतास्तं सुयज्ञमुनिं भजे ॥
सुयज्ञसूत्रजलधेर्येस्कृता वृत्तिनौर्दृढा ।
वरीयांसं तमाचार्यं वरदत्तसुतं श्रये ॥
यद्दर्शपूर्णमासादौ बह्वृचाम्नायचोदितम् ।
कौषीतकमतेनैतद्यथामति विचिन्त्यते ॥
गुरूपदेशमाश्रित्य धर्मान् कतिपयानिह ।
वक्ष्ये सूत्रक्रमेणादौ सामान्यात्सर्वकर्मसु ॥
देवकर्माणि यज्ञोपवीती प्राङ्मुख आचरेत् ।
पित्र्याणि कुर्यात् प्राचीनावीती प्राग्दक्षिणामुखः ॥
होत्रादेः कर्मसंयुक्तस्यारभ्याचमनं तथा ।
आकर्मसंस्थितेस्तेन वक्ष्यमन्त्रं विष्वगिष्यते ॥

End :

साम्ना वा यजुषा कुर्युः कर्माण्यपर ऋत्विजः ।
तूष्णीं ब्रह्मा तदानीति संस्कारोऽस्त्यर्थमेव तत् ॥
इति श्रुत्युदितं कर्म द्रष्टव्यं ब्रह्मणः स्फुटम् ।
अथोपरि गृहाणेति परग्राहे तथोत्तरे ॥
आमन्त्रितोऽनुजानाति स्विष्टकृत्युदकं स्पृशेत् ।
नित्यं स्पृशेदिलाह्वाने उत्तरेलां तथेतराम् ॥

---

R. No. 5400.

Paper. 10½ × 9½ inches. Foll. 20?. Lines, 20 in a page. Grantha. Good.

Transcribed in 1928–29 from a MS. of M.R.Ry. Appandanātha Śāstriar, Perumandūr, Tindivanam, S. Arcot district

पुण्यास्रवकथा.

PUṆYĀSRAVAKATHĀ.

Same work as that described under No. 12199 of the D.C.S. MSS., MSS., Vol. XXI. By Rāmacandra, desciple of Kēśavanandi.

**Beginning :**

श्रीवीरं जिनमानम्य वस्तुतत्त्वप्रकाशकम् ।
वक्ष्ये कथामयं ग्रन्थं पुण्यास्रवाभिधानकम् ॥
पुष्पोपजीवितनुजे वरबोधहीने
जाते प्रिये प्रथमनाकपतेर्गुणाढ्ये ।
श्रीजैनगेहकुलपं भुवि पूजयन्त्यौ
नित्यं ततो हि जिनपं विभुमर्चयामि ॥
सम्यक्त्वबोधचरणैः खलु वर्जितो ना
स्वर्गादिसौख्यमनुभूय वियच्चरेशः ।
पूजानुमोदजनिता भवति स्म पुण्यां
नित्यं ततो हि जिनपं विभुमर्चयामि ॥

* * * *

**Colophon :**

इति पुण्यास्रवाभिधानग्रन्थे केशवनन्दिदिव्यमुनिशिष्यरामचन्द्रमुमुक्षु-विरचिते दानफलव्यावर्णना षोडशवृत्तिरसमाप्ता ॥

यो भव्याब्धिदिवाकरोऽयमकरो मारेभपञ्चाननो
नानादुःखविधायि कर्म कुभृतो वज्रायते दिव्यधीः ।
यो योगीन्द्रनरेन्द्रवन्दितपदो विद्यार्णवोत्तीर्णवान्
जातः केशवनन्दिदेवयतिपः श्रीकुन्दकुन्दाह्वयः ॥
शिष्योऽभूत्तस्य भव्यः सकलजनहितो रामचन्द्रो मुमुक्षुः
ज्ञात्वा शब्दापशब्दौ सुविशदयशसः पद्मनन्द्यभिधानात् ।
वन्द्याद्वादीभसिंहात् परमयतिपतेः स व्यधाद्भव्यहेतोः
ग्रन्थं पुण्यास्रवाख्यं गिरिसमितिमितैः दिव्यपद्यैः कथार्यैः ॥

चतुस्सहस्रैर्योजितः पुण्यास्रवाह्वयः ग्रन्थः ।
स्थेयाद् वस्सतां चित्ते च शश्वच्चन्द्रादिव व्योम्नि ॥

यो योषित्स्पर्शवर्जी विगतमलमना ज(य)छदिग्धस्वदेहो
विख्यातो भव्यवन्द्यो विदितमुनिवरश्रीनराधीशकीर्तिः ।
जेजीयात् सङ्घयुक्तो भुवि खलु विदधद्धर्मवृद्धिं जनानां
ग्रन्थं पुण्यास्रवाख्यं विबुधजनमुखं वाचयेल्लेखयेत्तः ॥

ग्रन्थप्रमाणं ४९००.

* * * *

अज्ञानतमसा लुप्तो मार्गो रत्नत्रयात्मकः ।
तत्प्रकाशसमर्थ्याय नमोऽस्तु कुमुदेन्दवे ॥

वर्धतां जिनशासनम् ।

पुष्पोपजीवितनुजे . . . जिनपं विभुमर्चयामि ॥

अस्य वृत्तस्य कथा—

अत्रैवार्यखण्डे मगधदेशस्थराजगृहनगरेशः श्रेणिकः । स चैकदा ऋषिनिवेदकेन विज्ञप्तो देववर्धमानस्वामिसमवसरणं विपुलाचले स्थितमिति श्रुत्वानन्देन तत्र गत्वा जिनं पूजयित्वा गणधरदेवप्रभृतियतीनभिवन्द्य स्वकोष्ठे उपविष्टः । यावद्धर्मं शृणोति तावज्जगदाश्चर्यविभूत्या मण्डूकाङ्कित-मकरध्वजोपेतो देवः समायातः । तं दृष्ट्वा साश्चर्यहृदयः श्रेणिकः पृच्छति स्म गणेशम् । अयं किमिति पश्चादागतः केन पुण्यफलेन देवोऽभूदिति । गणभद्र आह—अत्रैव राजगृह श्रेष्ठी नागदत्तः श्रेष्ठिनी भवदत्ता । श्रेष्ठी निजायुरन्ते आर्तेन मृत्वा निजभवनपश्चिमवाप्यां मण्डूको जातः ॥

* * * *

**Colophon:**

इति पुण्यास्रवाभिधानग्रन्थे केशवनन्दिदिव्यमुनिशिष्यरामचन्द्रमुमुक्षु-विरचिते पञ्चनमस्कारफलव्यावर्णनाष्टकं समाप्तम् ।

**End:**

इति पराधीनापि भर्तृभीत्या व्यग्रधीरपि ब्राह्मणी सक्तून्मुनिदानेन देवी बभूवान्यः स्वतन्त्रः सर्वदा दानशीलः किं न स्यादिति ।

श्रीमन्तश्चारुगोत्रा जितरिपुगणकाश्शक्तितेजोऽधिकाश्च
भूत्वा ते मारसाम्या वरयुवतिगणा ज्ञानविज्ञानदक्षाः ।
पद्यैर्विज्ञानसङ्घैः ऋतुफलकथां भावयन्त्यर्थितो ये
भुक्त्वा संसारसौख्यं जगति सुविदितं मुक्तिलाभं लभन्ते ॥

---

R. No. **5401.**

Paper. $10\frac{1}{2} \times 9\frac{1}{2}$ inches. Foll. 112. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1928-29 from a MS. of Naḍuvil Maṭham, Trichur, Cochin State.

भामतीव्याख्यानम्—तिलकम्.

BHĀMATĪVYĀKHYĀNAM: TILAKAM.

Same work as that described under R. Nos. 3282 and 4190 ante.

By Allālasūri.

Begins in the second Pāda of the third Adhyāya and breaks off in the 25th Sūtra of the third Pāda of the same Adhyāya. Thus this MS. supplies the portions not available in the Mss. mentioned above.

**Beginning:**

॥ सन्ध्ये सृष्टिराह हि ॥

गमनागमने जैवे वैराग्याय निरूपिते ।
विरक्तस्याधुना तत्त्वमर्थशुद्ध्यै प्रयत्यते ॥

प्राक् न स्थानत इत्यस्मात् त्वम्पदार्थस्य शोधनं, तदादि तत्पदार्थस्य यावत्पादसमापनं, वियत्पादे श्रुतिविरोधनिरासो मुखतः, अर्थात् तत्त्वमर्थशोधनम् । इह तदेव मुखतः । तच्च पूर्वानुक्तप्रकारेणेति भेदः । इदानीं त्विति भाष्ये तस्यैवेति गतिप्रभेदपरामर्शभ्रमं प्रपञ्चनत्वथात्वं च नुदन् पूरयति—इदानीं त्विति । प्रथमाधिकरणोक्तिरेषा । जागरणे सूर्यादिज्योतिषः सत्वात् दुर्विवेचमात्मनः स्वयं ज्योतिष्ट्वमिति स्वप्नमाश्रित्य श्रुत्या अत्रायं पुरुषः स्वयं ज्योतिरित्युक्तम् । स्वप्नस्य सत्यत्वे तदापि तदवस्थं ज्योतिरन्तरमिति तन्निराकरणाय स्वप्नमृषात्वमुच्यते । ननु स्वाप्नव्यवहारस्यापि मनोयोनित्वोपपत्तेर्नात्मस्वप्रकाशत्वमिति चेन्न । मनसो रूपादिसाक्षात्कारजनने प्रकाशसापेक्षत्वं नियमादस्तीति जडप्रकाशे चित्प्रकाशस्यावश्यसिद्धेः ।

* * * *

**Colophon :**

इति श्रीमदल्लालसूरिविरचिते भामतीतिलके तृतीयस्याध्यायस्य द्वितीयः पादः ।

॥ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥

वृत्तानुवादविज्ञेयस्येत्यधिकमाशङ्क्य विज्ञेयविचारानन्तरं विज्ञानविचार इति सङ्गतिकथनार्थत्वमाह— पूर्वेणेति ।

**End :**

अनावर्तनीयत्वमूलविरोधाभावेऽप्येकत्र विनियुक्तस्यान्यत्र विनियोगविरोध एवेत्याशङ्क्याह—न चेति । बृहस्पतिसवेऽपि प्रागुक्ताभ्युपेत्यवादानुसारेणानुरूपोदाहरणं तु खादिरता। प्रतिबन्दी परिहारं शङ्कते—अथेति । प्रतीतिविरोध, अन्यशेषस्य नान्यशेषतेत्याभाति । प्रतिभानमात्र सिद्धो विरोध इत्यर्थः । लोके शयनासनादेरेकशेषस्याप्यन्यशेषस्य दर्शनादित्यर्थः ।

---

R. No. **5402.**

Paper. 10½ × 9½ inches. Foll. 106 Lines, 20 in a page. Dēvanāgari. Good.

Transcribed in 1928–29 from a MS. brought by M.R.Ry. Nāryaṇasvāmi Śāstri, Mylapore.

ऋग्वेदभाष्यम्.

ṚGVĒDABHĀṢYAM.

Same work as that described under R. No. 3649 ante.

By Skandhasvāmin.

Contains from the third Adhyāya of the fourth Aṣṭaka to the end of first Adhyāya (incomplete) of the fifth Aṣṭaka.

**Beginning :**

आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन ।
इयं वो अस्मत्प्रति हर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे ॥

आ, रुद्रासः, इन्द्रवन्तः, सजोषसः, हिरण्यरथाः, सुविताय, गन्तन, इयं, वः, अस्मत्, प्रति, हर्यते, मतिः, तृष्णजे, न, दिवः, उत्साः, उदन्यवे ।

आ रुद्रासः हे रुद्रासः रुद्रपुत्राः मरुतः इन्द्रवन्तः इन्द्रसंयुताः, इन्द्रेण सहेत्यर्थः । सजोषसः संप्रियमाणाः, इन्द्रेण सहैव परस्परतो वा हे हिरण्यरथाः हिरण्मयारथा येषां ते हिरण्य . . . . . . इण् गतौ अधिकरणे च तृन्प्रत्ययः । शोभनं गम्यते यस्मिन् तत् । सुवितं यज्ञ-कर्म । छान्दसत्वादुपसर्गस्यापि सोरुवङादेशः । तस्मै सुविताय यज्ञकर्मणे यज्ञसमाप्त्यर्थमित्यर्थः । आगन्तन आगच्छत ।

* * * *

**Colophon:**

इति चतुर्थस्य तृतीये एकविंशो वर्गः ।

**End:**

स्तुषे नरा आश्विने द्वे आश्वेदेवत्ये द्वे एते सूक्ते ।

स्तुष इति व्यत्ययेन मध्यमपुरुषः । स्तौमि । नरा मनुष्याकारौ दिवः द्युलोकस्य अस्य प्रसन्ता अस्तेर्भवतिना समानार्थस्येदं रूपम् । प्रभवन्तौ स्वामिनावित्यत्र कौ अश्विना ।

* * * *

ये च स्पर्धामात्रेण संग्रामा ये च परस्परवधेन तत्कारिणा योद्धा जयति, तदिषुधिरेव जयतीत्युच्यते । रथे अभीशूनामुत वाऽपि सारथिम् अभीशूनां सारथेश्चेयमृक् स्तुतिः । तत्रोत्तरार्धर्चेनाभीशू.

---

R. No. **5403.**

Paper. 10½ × 9½ inches. Foll. 22. Lines, 20 in a page. Dēvanāgarī Good.

Transcribed in 1928–29 from a MS. of M.R.Ry. Nīlakaṇṭhan Nambūdirippāḍ, Kāñiyūr-mana, Ottapalam, Malabar district.

**नामसिद्धान्तनिर्णयः.**

NĀMASIDDHĀNTANIRṆAYAḤ.

Foll. 1*a*—21*a*. Foll. 21*b* and 22 are left blank.

Deals with the greatness of the names of Śiva and Viṣṇu.

Complete.

Contains the following Varṇakas :—

१, शिवविष्णुनाम्नां सर्वाघनिवर्तकत्वकथनम्.

२. नाम्न्यर्थवादभ्रमनिराकरणाय नाममाहात्म्यप्रतिपादकशास्त्राणां स्वार्थे तात्पर्यमस्तीत्यत्र षड्विधमहातात्पर्यलिङ्गनिरूपणम्.

३. नामभावप्रतिपादकशास्त्राणां सृष्ट्यादिप्रतिपादकश्रुतिवाक्यैस्तुल्यप्रामाण्यरूपणद्वारा पुराणशताख्यायिकानां गुणवादरूपार्थवादत्वनिराकरणम्.

४. नामकीर्तनपरस्य दशापराधाचरणनिषेधकथनम्.

५. चरमक्षणेऽज्ञानेनोच्चरितनाम्नोऽपि स्वातन्त्र्येण मुक्तिप्रदत्वमस्तीत्यत्राभ्यासगतिसामान्यरूपमहातात्पर्यलिङ्गदर्शनम्.

६. जन्ममध्ये अघसंयुक्ते कदाचित्कृतनामोच्चारणस्य कालविलम्बेन फलप्रापकत्वकथनम्.

७. Do. do. do.

८. सुशीलस्य चरमश्वासवेलायां नामोच्चारणलाभराहित्यादिकथनम्.

**Beginning :**

यत्कारुण्यकटाक्षेण मूको वाग्मी भवेद् भुवि ।
तं श्रीमच्चिद्घनानन्दगुरुवर्यं नमाम्यहम् ॥
श्रीबालयोगिवर्यं च शिवानन्दमुनिं तथा ।
पूर्णानन्दमहं वन्दे पुरुषोत्तमयोगिनम् ॥
श्रीवाञ्छयनाथं नत्वादौ शिवां स्कन्दं गजाननम् ।
कमलेशेशयोर्नामप्रभावप्रविभासकः ॥
क्रियते नामसिद्धान्तनिर्णयोऽलेश्वराज्ञया ।
मद्बुद्धिनिर्णयायैव नैव पाण्डित्यसिद्धये ॥

तत्रादौ सर्वेषां जनानां सुलभतया सर्वाघनिवृत्तिः केनोपायेन सिध्येदिति विचारः क्रियते—

ज्ञानमुत्पाद्यते पुंसां क्षयात् पापस्य कर्मणः इत्यादावघनिवृत्तेर्ज्ञानोत्पत्तिहेतुत्वावगमेन ज्ञानस्य च "ज्ञानादेव तु कैवल्य"मित्यादौ मुक्तिहेतुत्वकथनेन तदर्थमघनिवृत्तेरवश्यं सम्पादनीयत्वात् । तत्र मन्वादिस्मृतिषु विहितानां प्रायश्चित्तानां न सर्वाघनिवर्तकत्वम् ; एकैकस्याघस्य प्रत्येकमे-

कैकप्रायश्चित्तविधानेनेह जन्मनि जन्मान्तरेषु च कृतानां कर्मणामियत्ताज्ञानासंभवेन स्मृत्युक्तप्रायश्चित्तेन सर्वाघनिवृत्त्यनुपपत्तेः ।

**End:**

वागर्थाविव संपृक्ताविति प्रसिद्धतयोक्तत्वात् । एवं च पञ्चमवर्णके जगदीश्वरस्यापि अ . . त्येवेति यदुक्तं तत् सिद्धमेव भवति । वाच्यवाचकयोर्भेदाभावेन केवलवाचकशिवनामोच्चारणेन तद्वाच्यशिवप्राप्तिसंभवे विवादाभावात् । अत आदौ यदुक्तं विमर्शने अनधिकारिणो मुक्तिकाङ्क्षिणः परमेश्वरनामोच्चारणेन सर्वाघनिवृत्तिद्वारा तत्सारूप्यादिमुक्तिः सिध्येदिति तत्सिद्धमेवेति निश्चितं भवति । अतः सर्वमनवद्यम् ।

**Colophon:**

इति नामसिद्धान्तनिर्णयाख्ये ग्रन्थे सुशीलस्य चरमश्वासवेलायां नामोच्चारणलाभराहित्यादिकथनं नामाष्टमं वर्णकं समाप्तम् ।

---

R. No. **5404.**

Paper. 10½ × 1½ inches. Foll. 12. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1928–29 from a MS. of M.R.Ry. Oravakaravariathu Rāma Vāriyār, Talepparamba, Malabar district.

शिशुपालवधव्याख्या.

ŚIŚUPĀLAVADHAVYĀKHYĀ.

A commentary on the Śiśupālavadha of Māgha. Commentator's name is not known.

Contains 68 stānzas in the first Sarga.

**Beginning:**

गुरूणां चरणाम्भोजपरागविशदीकृते ।
मन्मनोदर्पणे नित्यमाविरस्तु रमापतिः ॥
पूर्वैः कृतेषु माघस्य व्याख्यानेष्वपटीयसाम् ।
बालानां सुखबोधाय लिखितः क्रियतेऽन्वयः ॥

श्रियः पतिरिति—श्रियः पतिः जगन्निवासः जगतां निवासः वासस्थानं जगत् शासितुं श्रीमति वसुदेवसद्मनि वसन् हरिः अम्बरादवतरन्तं हिरण्यगर्भाङ्गभुवं मुनिं ददर्शेत्यन्वयः । श्रियः लक्ष्म्याः, लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया इत्यमरः । पतिः भर्ता । धवः प्रियः पतिर्भर्तेत्यमरः ।

---

**End :**

स्मरतीति । भवान् दाशरथिः दशरथपुत्रः भवन् आविद्धचलज्जला-विलं आविद्धेन चलता जलेनाविलं कलुषं पयोधिं विलङ्घ्य वनान्तात् वन-प्रदेशाच्च वनितापहारिणम् अमुं रावणं लङ्कां निकषा लङ्कायाः समीपे हनिष्यति हतवान् अदः त्वं स्मरसि ।

---

R. No. **5405.**

Paper. 10½ × 9½ inches. Foll. 224. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1928–29 from a MS. of M.R.Ry. K. C. Mānavikrama-Rājā, Kōṭṭakal, Malabar district.

महाभारतव्याख्या.

MAHĀBHARATAVYĀKHYĀ.

A commentary on the Mahābhārata. By Kṛṣṇa.

Contains the Sabhāparvan which breaks off in the 113th Sarga.

**Beginning :**

इदानीमस्मिन् किल सम्प्रदायक्रमेण . . . . तद्वंशजातेन कृष्ण-नाम्ना सभापर्व व्याख्यायते—

पाण्डवानां पूर्ववृत्तान्तं खाण्डवदाहावधि श्रुत्वा जनमेजयस्य तेषु बहुमतिरासीत् । परिपालनं कुर्वतां तेषां सर्वाणि कर्माणि नयपुरस्सराणि तस्मान्नयशास्त्रमनुस्मृत्य धार्तराष्ट्रैः कृतं विषानुप्रदानादिकं क्षान्तं न दुर्बल-त्वात् । अतिप्रबलोऽपि दुर्बलं शत्रुं हन्तुमकाले प्रवृत्तिं न कुर्यात् । तेषु वध्यतामापाद्यैव हन्यात् । अन्यथा चेदिह च परत्र च बाधा स्यादिति नयशास्त्रे उक्तम् ।

* * * *

**Colophon :**

इति सभापर्वव्याख्याने कृष्णगीता नाम प्रथमोऽध्यायः ॥

**End :**

**Colophon :**

इति सभापर्वार्थप्रकाशिकायां कृष्णगीतायां द्विशततमोऽध्यायः ।

विदुरवाक्यं श्रुत्वापि सभ्याः किञ्चिदपि नोक्तवन्तः । तदानीं द्रौपदी पुनरपि सभ्यान् जनानात्मवशे नेतुमिच्छया लौकिकपूर्वं प्रलपन्ती आह— पुरस्तादित्यादिना ।

* * * *

त्रिविधमित्याह—समक्षदर्शनात् साक्ष्यं येषां जनानामादानप्रदानादि-कर्मानुष्ठाने यस्य तदुभयं तेन हेतुना ससाक्ष्यं श्रवणाद्वा साक्ष्यं श्रवणात् अस्माभिरेवं कर्म कृतं एतत् पश्चादस्माभिर्विवादश्चेदेवमिति भवता वक्तव्य मिति पुनस्तेषां सकाशात् श्रवणाच्च साक्ष्यं विधारणाच्च विशेषणात् उभयोः कर्मणः ।

---

## R. No. 5406.

Paper. 10½ × 9½ inches. Foll. 80. Lines, 20 in a page. Grantha. Good.

Transcribed in 1928–29 from a MS. of M.R.Ry. Tambi Nāyanār Alagrāmam, South Arcot district.

### उपासकाध्ययनम्.

### UPĀSAKĀDHYAYANAM.

Foll. 1*a*—79*a*. Foll. 79*b*—80 are left blank.

A treatise on some of the principles of Jainism.

By Vasunandin.

Complete.

**Beginning:**

सुरवइकिरीडमणिकिरणवारिधाराहिसित्तपअकमलम् ।
वरसअलविमलकेवलपआसिआसेसतच्चत्थम् ॥

(छा)—

सुरपति किरीटमणिकिरणवारिधाराभिषिक्तपदकमलम् ।
वरसकलविमलकेवलप्रकाशिताशेषतत्त्वार्थम् ॥
साआरोणाआरो भविअजणाणं जेण्ण देसिओ धम्मो ।
णमिऊण तं जिणन्दं सावअधम्मं परूवेमो ॥

(छा)—

सागारोऽनागारो भविकजनानां येन दर्शितो धर्मः ।
नमनं कृत्वा तं जिनेन्द्रं श्रावकधर्मं प्ररूपयामि ॥

विउलइरिपव्वएन्दभूइगणेसिणा सेणिअयस्स ।
जह दिट्ठं तह गुरुपरिवाडीए भणिज्जमाणं णिसामेह ॥

(छा)—

विपुलगिरिपर्वेवेन्द्रभूतिगणेशिना श्रेणिकस्य ।
यथा दृष्टं तथा गुरुपरिपाट्या भणिष्यमाणं शृणुत ॥
दस्सणव्वअसामाइअपोसहसचित्तराअभुत्तीअ ।
बम्हचारिआरम्भपरिग्गहअणुमणुदिट्ठदेसविरयम्मि ॥

(छा)—

दर्शनव्रतसामायिकप्रोषयसचित्तरागभुक्तिश्च ।
ब्रह्मचर्यारम्भत्यागश्च परिग्रहत्यागानुमोदनत्यागः उपदेशिताहारविरक्ति?

**End:**

जं किं वि एद्ध भणिअं अआणमाणेण पवअसाणविरुद्धम् ।
खमिऊण(कदुअ) पवअणाणुसोहित्ता तं पयासंतु ॥

(छा)—

यत्किमपि ईदृशं भणितं अजाणमामेन प्रवचनविरुद्धम् ।
तत्क्षमां कृत्वा प्रवचनज्ञानोद्धता शोधयित्वा प्रकाशयन्तु ॥
छच्चसया पण्णासुत्तराणि एअस्स गंथपरिमाणम् ।
वसुणन्दिणा णिवद्धं अत्थरियव्वं वियट्टेहिम् ॥

(छा)—

षट्छतानि पञ्चाशदुत्तराणि एतस्य ग्रन्थपरिमाणम् ।
वसुनन्दिना निबद्धं विस्तरितं बुद्धिऋद्धिभिः ॥

**Colophon:**

इत्युपासकाध्ययनं वसुनन्दिना कृतमिदं समाप्तम् ।
इति वसुनन्दिना कृतो(तम्) उपासकाध्ययनं समाप्तम् ॥

---

R. No. **5407.**

**Paper.** 10½ × 9½ inches. Foll. 98. Lines, 20 in a page. **Grantha.** Good.

Transcribed in 1928-29 from a MS. of M.R.Ry. Nīlakaṇṭha Nambūdirippāḍ Kaññūr-mana, Ottapalam, Malabar district.

शुचीन्द्रमाहात्म्यम्.
ŚUCĪNDRAMĀHĀTMYAM.

Foll. 1a—97b. Fol. 98 is left blank.

Deals with the sacredness and religious importance of Sucīndra Kṣētrā in Malabār district.

Complete.

**Beginning :**

तच्छ्रुत्वा मुनयः सर्वे जहृषुः सूतभाषितम् ।
अत्रेराश्रममाहात्म्यं नैमिशारण्यवासिनः ॥
अत्याश्चर्यमुपाविष्टाः पुनः पप्रच्छुरादृताः ।
वक्तारं मुनयः सूतं पुराणश्रवणोत्सुकाः ॥
पुनश्च श्रोतुकामाः स्मः सूतेदानीं वयं मुने ।
अत्रेराश्रममाहात्म्यं श्रवणानन्दकारकम् ॥

* * * *

सूतः—

साधु साध्वात्मतत्त्वज्ञाः सत्रसङ्गाः समीरिताः ।
युष्माभिर्मुनिशार्दूलैर्नैमिशारण्यवासिभिः ॥
गुह्याद्गुह्यतमं लोके गोपनीयं मुनीश्वराः ।
दुर्लभं देहिनां श्रोतुमेतदाश्रमवैभवम् ॥
वेदान्तसारपीयूषं गायत्र्यात्मकमद्भुतम् ।
आत्मज्ञानप्रदं चेदमज्ञानतिमिरापहम् ॥
अत्रेराश्रममाहात्म्यं तादृशं प्रवदामि वः ।
विशेषं स्थानमुख्यस्य प्रभावं धरणीभृतः ॥
मूर्तिप्रभावं नद्याश्च भक्तानां फलवैभवम् ।
एतत्सर्वं च भवतां वदामि मुनिसत्तमाः ॥

* * * *

**Colophon :**

इति शुचीन्द्रमाहात्म्ये प्रथमोऽध्यायः समाप्तः ।

* * * *

ब्रवीम्यत्र्याश्रमस्थानं शृणुतानन्यमानसाः ।
काश्यास्तु दक्षिणे भागे मलयाद्रिर्महान् गिरिः ॥
तस्य दक्षिणदिग्भागे दक्षिणाब्ध्युत्तरे तटे ।
ज्ञानक्षेत्रस्य निकटे पुण्याश्रम इति श्रुतः ॥
तदाश्रमेऽत्रिर्भगवान् पुरा विष्णोरनुग्रहात् ।
चकार वसतिं सम्यग् धर्मपत्न्या सह द्विजः ॥
तदा प्रभृति तत्क्षेत्रं भुवनेष्वखिलेष्वपि ।
अगादखिलपापघ्नमत्र्याश्रम इति प्रथाम् ॥

**End:**

शुचीन्द्रमाहात्म्यमिदं पृथिव्यां पठन्ति शृण्वन्ति च ये पृथिव्याम् ।
स्थाणोः प्रसादात् सकला जनास्ते स्वाभीष्टमग्र्यं फलमाप्नुवन्ति ॥

**Colophon:**

इति शुचीन्द्रमाहात्म्ये चतुर्विंशोऽध्यायः समाप्तः ॥

---

R. No. **5408.**

Paper. 10½ × 9½ inches. Foll. 208. Lines, 20 in a page. Grantha. Good.

Transcribed in 1928–29 from a MS. of M.R.Ry. V. S. Narasiṁhācāryār, Villiyambākam, Chingleput district.

Bound in two volumes.

तन्त्रशिखामणिः.

TANTRAŚIKHĀMAṆIḤ.

Same work as that described under R. No. 4417 of the D.C.S. MSS., Vol. IX. By Rājacūḍāmaṇidīkṣita, son of Śrīnivāsadīkṣita.

Contains the tenth Adhyāya complete.

**Beginning:**

॥ विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् ॥

ऊहनिरूपणानन्तरं बाधो निरूप्यते—

नन्वधिकारलक्षणानन्तर्यमेव बाधलक्षणस्य किं न स्यात् । यदि विकृतिष्वतिदिष्टानामवघातादीनां कृष्णलादिष्वर्थलोपादिना बाधो वक्तव्यः । अतिदेशधर्माणामपूर्वप्रयुक्ततया चोदनालिङ्गविशेषाच्च भवतीति सप्तमाष्टमयो·

रानन्तर्यमेव बाधलक्षणस्य युक्तं तथापि नवमात् प्रागेव दशमारम्भः किं न स्यात् । न ह्यतिदेशवदूहस्यापि बाधं प्रत्युपजीव्यतास्ति । कृष्णलेष्ववघातस्य प्रकृतिक्लृप्तद्वारापेक्षया द्वारान्तरसम्बन्धनिमित्तान्यथाभावात्मकोहाभावेऽपि बाधसद्भावात् नीवारादाववघातस्य द्वारान्तरसम्बन्धनिमित्तान्यथाभावात्मकोहसद्भावेऽपि बाधाभावात् । अत उभयथापि व्यभिचारात् । अत ऊहस्य बाधं प्रति उपजीव्यत्वाभावादूहात् प्रागेव बाधविचारः किं न स्यात् । न चेदं चोद्यं तिन्त्रिणीचोद्यकल्पत्वादुपेक्ष्यमिति वाच्यम् । नवमात् प्रागेव दशमारम्भौचित्यात् ।

* * * *

**Colophon:**

इति श्रीमदद्वैतविद्याचार्यसाग्निचित्याप्तवाजपेययाजिश्रीवेङ्कटेश्वरदीक्षितनियोगानुभवसमुन्मिषितमनीषाविशेषस्य विश्वजिद्याजिनः श्रीराजचूडामणिदीक्षितस्य कृतिषु तन्त्रशिखामणौ दशमस्याध्यायस्य प्रथमः पादः ।

**End:**

अजामित्वं फलत्वेन प्रशंसार्थमेव कीर्त्यते । यथोपस्तृणात्यभिघारयत्यमृताहुतिमेवैनां करोतीति उपस्तरणाभिघारयोश्च हविरमृतीकरणार्थं प्रशंसार्थं कीर्त्यते तद्वत् । तस्मादेकपुरोडाशायामप्युपांशुयाजः स्यादित्यनवद्यम् ।

**Colophon:**

इति श्रीमदद्वैतविद्याचार्यसर्वतन्त्रस्वतन्त्रसाग्निचित्याप्तवाजपेययाजिश्रीवेङ्कटेश्वरदीक्षितनियोगानुभवसमुन्मिषितमनीषाविशेषस्य दन्तिद्योतिदिवाप्रदीपाङ्कसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षिततनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरगुरुचरणसहजतालब्धविद्याविशारदस्य श्रीविश्वजिद्याजिनः श्रीराजचूडामणिदीक्षितस्य कृतिषु तन्त्रशिखामणौ दशमस्याध्यायस्याष्टमः पादः ।

समाप्तश्चाध्यायः ।

---

R. No. **5409.**

Paper. $10\frac{1}{2} \times 9\frac{1}{2}$ inches. Foll. 123. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928–29 from a Library MS. described under No. 1064 of D.C.S.

आपस्तम्बश्रौतसूत्रवृत्तिः.

ĀPASTAMBAŚRAUTASŪTRAVṚTTIḤ.

Foll. 1*a*—122*b*. Fol. 123 is left blank.

Same work as that described under No. 1064 of the D.C.S. MSS., Vol. II. By Ahōbilasūri, son of Nṛsiṁhayajvan.

Contains up to the fourth Paṭala of the fourth Praśna.

---

## R. No. 5410.

Paper. 10½ × 9½ inches. Foll. 131. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928-29 from a Library MS. described under R. No. 970.

बृहज्जातकम्, सटीकम्.

BṚHAJJĀTAKAM WITH COMMENTARY.

Foll. 1*a*—129*a*. Foll. 129*b*—131*b* are left blank.

Same work as that described under R. No. 970 ante. The text is by Varāhamihira. The commentary is called Subōdhinī.

Contains the Adhyāyas 1 to 6 complete and 7 incomplete.

---

## R. No. 5411.

Paper. 10½ × 9½ inches. Foll. 100. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928–29 from a Library MS. described under No. 1517 of the D.C S. MSS.

पदस्मृतिः.

PADASMṚTIḤ.

Same work as that described under No. 1517 of the D.C.S. MSS., Vol. III.

Incomplete.

---

## R. No. 5412.

Paper. 10½ × 9½ inches. Foll. 260. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928–29 from a Library MS. described under No. 5409 of D.C.S. MSS.

Bound in two volumes.

वीरमाहेश्वराचारसंग्रहः.

VĪRAMĀHĒŚVARĀCĀRASAṄGRAHAḤ.

Same work as that described under No. 5489 of the D C.S. MSS., Vol. XI. Nīlakaṇṭhanāganātha.

Begins in the course of the 5th Adhyāya and breaks off in the 78th Adhyāya.

---

R. No. **5413.**

Paper. 10½ × 9½ inches. Foll. 50. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928–29 from a Library MS. described under No. 1447 of the D.C.S. MSS.

सिद्धान्तकौमुदीव्याख्या—ललिता.

SIDDHĀNTAKAUMUDĪVYĀKHYĀ : LALITĀ.

Same work as that described under No. 1447 of the D.C.S. MSS., Vol. III. By Vaidyanāthadīkṣita.

Begins in the Lugvikaraṇa and breaks off in the Śavikaraṇa in Uttarārdha.

---

R. No. **5414.**

Paper. 10½ × 9½ inches. Foll. 122. Lines, 20 in a page. Grantha. Good.

Restored in 1928–29 from a Library MS. described under R. No. 343 ante.

जैमिनिसूत्रवृत्तिः—भावकौमुदी.

JAIMINISŪTRAVṚTTIḤ : BHĀVAKAUMUDĪ.

Foll. 1*a*—122*a*. Fol. 122*b* is left blank.

Same work as that described under R. No. 343 ante.

By Veṅkaṭēśa.

1—14 Paṭalas complete.

---

R. No. **5415.**

Paper. 10½ × 9½ inches. Foll. 84. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928–29 from a Library MS. described under R. No. 387 ante.

(*a*) मानवोल्लासः.

MĀNAVŌLLĀSAḤ.

Foll. 1*a*—43*a*.

Same work as that described under R. No. 387(*b*) ante.

By Kandāḍai Appagoṇḍācārya, son of Appalācārya.

Complete.

(*b*) तत्त्वनिर्णयः.

TATTVANIRṆAYAḤ.

Foll. 43*a*—84*b*.

Same work as that described under R. No. 387(*c*) ante.

By Kandāḍai Appagoṇḍācārya, son of Appalācārya.

Complete.

R. No. 5416.

Paper. 10½ × 9½ inches. Foll. 26. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928–29 from a Library MS. described under R. No. 387 ante.

विशिष्टाद्वैतनिर्णयः.

VIŚIṢṬĀDVAITANIRṆAYAḤ.

Foll 1*a*—25*a*. Foll. 25*b* and 26 are left blank.

Same work as that described under R. No. 387(*g*) ante.

By Kandāḍai Appakoṇḍācārya, son of Appalācārya.

Complete.

R. No. 5417.

Paper. 10½ × 9½ inches. Foll. 52. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928–29 from a Library MS. described under R. No 381 ante

काव्यप्रकाशिकाव्याख्या – ऋजुवृत्तिः

KĀVYAPRAKĀŚIKĀVYĀKHYĀ : ṚJUVṚTTIḤ.

Foll. 1*a*—51*b*. Fol. 52 is left blank.

Same work as that described under R. No. 381 ante.

By Narasiṁhasūrin, son of Timmājimantrin.

Ullāsas 1 to 3 complete, and 4 incomplete.

## R. No. **5418.**

Paper. $10\frac{1}{2} \times 9\frac{1}{2}$ inches. Foll. 64. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928-29 from a Library MS. described under R. No. 3906 ante.

### सूर्यसिद्धान्तः, कामदोग्ध्रीसहितः.

### SŪRYASIDDHĀNTAḤ WITH KĀMADŌGDHRĪ.

Same work as that described under R. No. 3906 ante.

By Timmayajvan, son of Veṅkaṭāmbā and Mallayajvan and grandson of Honnayārya.

Complete.

---

## R. No. **5419.**

Paper. $10\frac{1}{2} \times 9\frac{1}{2}$ inches. Foll. 66. Lines, 20 in a page. Grantha. Good.

Restored in 1928-29 from a Library MS. described under R. No. 3957 ante.

### विहगेन्द्रसंहिता.

### VIHAGĒNDRASAṀHITĀ.

Foll. 1*a*—65*b*. Fol. 66 is left blank.

Same work as that described under R. No. 3957 ante.

Contains the Paṭalas 1 to 23 complete and a small portion in the 24th Paṭala.

---

## R. No. **5420.**

Paper. $10\frac{1}{2} \times 9\frac{1}{2}$ inches. Foll. 46. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928-29 from a Library MS. described under No. 1426 of the D.C.S. MSS.

### लघुशब्देन्दुशेखरव्याख्या.

### LAGHUŚABDĒNDUŚĒKHARAVYĀKHYĀ.

Foll. 1*a*—45*b*. Fol. 46 is left blank

Same work as that described under No. 1426 of the D.C.S. MSS., Vol. III.

Contains to the end of Kāraka, a portion in the middle of Śabdādhikāra being wanting.

## R. No. 5421.

Paper. $10\frac{1}{2} \times 9\frac{1}{2}$ inches. Foll. 46. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928–29 from a Library MS. described under R. No. 387 ante.

### मायिभङ्गः, आन्ध्रटीकासहितः.

### MĀYIBHAṄGAḤ WITH TELUGU MEANING.

Same work as that described under R. No. 387(*f*) ante.

By Kandāḍai Appagoṇḍācārya, son of Appalācārya.

Complete.

---

## R. No. 5422.

Paper. $10\frac{1}{2} \times 9\frac{1}{2}$ inches Foll. 102. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928–29 from the Library MS. described under R. No. 574 ante.

### न्यायसिद्धान्तमञ्जरीटीका—आमोदः.

### NYĀYASIDDHĀNTAMAÑJARĪṬĪKĀ : ĀMŌDAḤ.

Foll 1*a*—101*b*. Fol. 102 is left blank.

Same work as that described under R. No. 574 ante.

Contains the Pratyakṣaparicchēda complete, without the beginning.

---

## R. No. 5423.

Paper. $10\frac{1}{2} \times 9\frac{1}{2}$ inches. Foll. 54. Lines, 20 in a page. Dēvanāgarī Good.

Restored in 1928–29 from a Library MS. described under R. No. 197 ante.

### काव्यप्रकाशव्याख्या— बालचित्तानुरञ्जनी.

### KĀVYAPRAKĀŚAVYĀKHYĀ : BĀLACITTĀNURAÑJANĪ.

Foll. 1*a*—53*b*. Fol. 54 is left blank.

Same work as that described under R. No. 197 ante.

By Sarasvatītīrthayati.

Breaks off in the fifth Ullāsa.

## R. No. 5424.

**Paper.** $10\frac{1}{2} \times 9\frac{1}{2}$ inches. Foll. 12. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928-29 from a Library MS. described under No. of the D.C.S. MSS., 1509.

### कारकप्रक्रिया.

### KĀRAKAPRAKRIYĀ.

Foll. 1*a*—11*a*. Foll. 11*b*—12 are left blank

Same work as that described under No. 1509 of the D.C.S. MSS., Vol. III.

Complete.

---

## R. No. 5425.

Paper. $10\frac{1}{2} \times 9\frac{1}{2}$ inches. Foll. 209. Lines, 20 in a page Dēvanāgarī. Good.

Restored in 1928-29 from a Library MS. described under No 1349 of the D C S. MSS.

### प्रक्रियाकौमुदीव्याख्या—प्राक्रियाप्रसादः.

### PRAKRIYĀKAUMUDĪVYĀKHYĀ: PRAKRIYĀPRASĀDAḤ.

Foll. 1*a*—207*b* Fol. 208 is left blank.

Same work as that described under No. 1349 of the D.C S. MSS., Vol. III. By Viṭṭhalācārya, son of Narasiṁhācārya.

Contains from the beginning to the end of Samāsa.

---

## R. No 5426.

Paper. $10\frac{1}{2} \times 9\frac{1}{2}$ inches. Foll 20 Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928-29 from a Library MS. described under R. No. 387 ante.

### तत्त्वनिष्कर्षः.

### TATTVANIṢKARṢAḤ.

Same work as that described under R. No 387(*l*) ante.

By Kandāḍai Appakoṇḍācārya, son of Appalācārya.

Complete.

R. No. **5427.**

Paper. 10½ × 9½ inches. Foll. 28. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928-29 from a Library MS. described under R. No. 387 ante.

सज्जनामृतम्.

SAJJANĀMṚTAM.

Same work as that described under R. No. 387(a) ante.

By the same author as that of the above.

Complete.

---

R. No. **5428.**

Paper. 10½ × 9½ inches. Foll. 42. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928-29 from the Library MS. described under No. 1427 of the D.C.S MSS.

लघुशब्देन्दुशेखरव्याख्या.

LAGHUŚABDĒNDUŚĒKHARAVYĀKHYĀ.

Same work as that described under No. 1427 of the D.C.S. MSS., Vol. III.

Breaks off in the Saṁjñāprakaraṇa in the Pūrvārdha.

---

R. No. **5429.**

Paper. 10½ × 9½ inches. Foll. 32. Lines, 20 in a page. Dēvanāgari Good.

Restored in 1928-29 from a Library MS. described under R. No. 3537 ante.

सिद्धान्तरत्नावलिः.

SIDDHĀNTARATNĀVALIḤ.

Foll. 1*a*—30*b*. Foll. 31 and 32 are left blank.

Same work as that described under R. No. 3537 ante.

By Śrīnivāsa, disciple of Śrīśailasūri

Contains the Prakṛtilakṣana, Jīvalakṣaṇa and Īśvaralakṣaṇa complete and Buddhilakṣaṇa incomplete.

## R. No. 5430.

Paper. 10½ × 9½ inches. Foll. 34. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928–29 from a Library MS. described under R. No. 387 ante.

### रहस्यत्रयसारार्थः.

### RAHASYATRAYASĀRĀRTHAḤ.

Foll. 1*a*—33*b*. Fol. 34 is left blank.

Same work as that described under R. No. 387(*j*) ante.

By Kandāḍai Appagondācārya, son of Appalācārya..

Breaks off in the third Adhikāra.

---

## R. No. 5431.

Paper. 10½ × 9½ inches. Foll. 30. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928–29 from a Library MS. described under R. No. 387 ante.

### तत्त्वामृतम्.

### TATTVĀMṚTAM.

Foll. 1*a*—29*b*. Fol. 30 is left blank.

Same work as that described under R. No. 387(*e*) ante.

By the same author as that of the above.

Incomplete.

---

## R. No. 5432.

Paper. 10½ × 9½ inches. Foll. 20. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1928–29 from a Library MS. described under R. No. 387.

### कुदृष्टिभङ्गः.

### KUDṚṢṬIBHAṄGAḤ

Foll. 1*a*—19*a*. Fol. 20 is left blank.

Same work as that described under R. No. 387(*d*) ante.

By the same author as that of the above

Complete.

R. No. **5433.**

Paper. 1⋅½ × 8½ inches. Foll. 16. Lines, 20 in a page. Dēvanāgarī Good.

Restored in 1928–29 from a Library MS. described under No 1494 of the D.C.S. MSS.

पदार्थदीपिका.

PADĀRTHADĪPIKĀ.

Foll. 1*a*—15*a*. Foll. 15*b* and 16 are left blank.

Same work as that described under No 1494 of the D.C.S. MSS, Vol. III. By Gauraṇārya.

Contains 5 Prakāśas.

---

R. No. **5434.**

Palm-leaf. 17 × 1½ inches. Foll. 120. Lines, 6 in a page. Telugu. Good.

Purchased in 1928–29 from M.R.Ry. N. K Vakulābharaṇam, Madras.

(*a*) हनूमद्व्रतकल्पः.

HANUMADVRATAKALPAḤ

Foll. 1*a*—17*a*

Deals with the manner of worshipping Hanumat. Taken from the Bhaviṣyōttarapurāṇa.

Complete.

**Beginning :**

माता नृसिंहश्च पिता नृसिंहो भ्राता नृसिंहश्च सखा नृसिंहः ।
विद्या नृसिंहो द्रविणं नृसिंहः स्वामी नृसिंहस्सकलं नृसिंहः ॥
इतो नृसिंहः परतो नृसिंहो यतो यतो याति ततो नृसिंहः ।
नृसिंहदेवादधिकं न जाने तस्मान्नृसिंहं शरणं प्रपद्ये ॥

पू . . . थौ अस्माकं . . . र्थं सत्सन्तानसमृद्ध्यर्थं मनोवाञ्छादिसकलैश्वर्यसिद्ध्यर्थं श्रीहनूमद्व्रताङ्गपम्पापूजां करिष्य इति सङ्कल्प्य, ततः कलशपूजा ।

क्षीरोदार्णवसंभूत इन्द्रनीलसमप्रभे ।
ध्यायामि त्वामहं देवि पम्पा येति नमोऽस्तु ह ॥

* * * *

व्रतप्रारम्भः—

पुनस्सङ्कल्प्य, पू . . . थौ, अस्माकं . . . थं श्रीहनुमद्देवता-मुद्दिश्य श्रीहनुम . . . थं भविष्योत्तरपुराणोक्तकल्पोक्तप्रकारेण हनूमद्व्रताङ्गध्यानावाहनादिषोडशोपचारपूजां करिष्ये ।

ओं नमो भगवते वायुनन्दनायेति मन्त्रेण द्वादशवारं जपेत् । कुसुमाक्षतान् गृहीत्वा

अनन्तगुणरत्नाय विश्वरूपधराय च ।
सूत्रग्रन्थिषु सुस्थाय ह्याञ्जनेयाय ते नमः ॥

इति नूतनदोरं कलशे निक्षिप्य नमस्कारं कृत्वा ।

*     *     *     *

कथाप्रारम्भः—

ऋषयो जाह्नवीतीरे शौनकाद्या द्विजोत्तमाः ।
प्रणम्य जगतां नाथं रमानाथं मुहुर्मुहुः ॥
सूतं पुराणवक्तारं महाभागवतोत्तमम् ।
दृष्ट्वा प्राञ्जलयस्सर्वे प्रोचुर्व्रतपरायणाः ॥

ऋषयः—

वासुदेवकथोपेतव्रतानि बहुशस्त्वया ।
प्रोक्तानि कृपया सूत व्रतमन्यद्वदस्व नः ॥

सूतः—

शृणुध्वं मुनयस्सर्वे मत्तः परतरं व्रतम् ।
चतुर्वर्णोपवर्णानां कर्तव्यं पावनं व्रतम् ॥

**End:**

नमस्ते नमस्ते महाभीष्टदातो नमस्ते नमस्तेऽनिशं रामभक्त ।

एतच्छृण्वन्ति सततं ये पठन्ति च मानवाः ।
ते सर्वे पापनिर्मुक्ता यास्यन्ति परमां गतिम् ॥

**Colophon:**

इति श्रीभविष्योत्तरपुराणे वेदव्यासयुधिष्ठिरसंवादे हनूमत्कल्पस्संपूर्णः ॥

(5) धात्रीपूजाकल्पविधिः.

DHĀTRĪPŪJĀKALPAVIDHIḤ.

Foll 17b—21a.

Deals with the worship of God Viṣṇu along with the Dhātrī (tree.) For details vide No. 8349 D.C.S. MSS , Vol. XVI.

Complete

**Beginning:**

यजमानो द्विजैस्साकं वृद्धैर्बालैश्च बन्धुभिः ।
गत्वा धात्रीवनं सम्यक् स्नात्वा शुद्धापगाजले ॥
वाचयित्वा स्वस्त्ययनं देवपूजां च कारयेत् ।

सङ्कल्पं कुर्यात्—मम सर्वेषां पापानामपनोदनार्थं श्रीमहाविष्णुप्रीत्यर्थं सर्वेषां पितृणामक्षय्यपुण्यलोकावाप्त्यर्थं कार्तिकपूर्णमासीप्रयुक्तं यथासंभवनियमेन यथासंभवद्भिर्द्रव्यैर्यथासंभवद्भिरुपचारैश्च यावच्छक्त्या ध्यानावाहनादिषोडशोपचारैः धात्रीसहितदामोदरपूजां च करिष्ये ।

**End:**

गोक्षीरं तिलपक्कं च शर्करासर्पिसंयुतम् ।
इदं मधु मया दत्तं तव तुष्ट्यर्थमेव च ॥
प्रमोद देवदेवेश प्रणतिः क्रियते मया ।
गृहाण श्रद्धया दत्तं सुप्रसन्नो भव प्रभो ॥
श्रीधात्रीवृक्षमूलस्थं मन्दस्मेरं रमापतिम् ।
ते यान्ति विष्णुसायुज्यं यत्पश्यन्तीह चक्षुषा ॥

धात्रीमूले स्नपनम् ।

(6) वनभोजनविधिः.

VANABHOJANAVIDHIḤ

Foll. 21—25b.

There is a custom among some classes of Hindus to dine with relations and friends in a grove of Dhātrī trees on the full-moon day in the month of Kārttika. This Vidhi deals with this custom and is taken from the Bharadvāja Saṃhita of the Skandapurāṇa.

Complete.

**Beginning:**

कार्तिकमासे वनभोजनविधिः । स्कान्दपुराणे भरद्वाजसंहितायाम्—

श्रीहंस उवाच—

कार्त्तिकस्योत्सवं वक्ष्ये शृणुष्व कमलोद्भव ।
यत्कृत्वा मुच्यते जन्तुर्महापापैस्तथा परैः ॥
कार्त्तिके मासि संप्राप्ते मासमेकं निरन्तरम् ।
नक्तं कार्यं मम प्रीत्यै मध्याह्ने पूजयेत् क्रमात् ॥
त्रिकाले मम हि प्राज्ञो दीपमालां समर्पयेत् ।
सन्दिदीपेति मन्त्रेण वर्तिकां तु प्रबोधयेत् ॥
घृतं मिक्षेति मन्त्रेण घृतं तत्र प्रमार्जयेत् ।
तैलाभ्यंयन्ति मन्त्रेण तैलं वा तत्र पूरयेत् ॥

**End:**

एवं यः कुरुते भक्त्या तस्य विष्णोः प्रसादतः ।
भवेयुस्सर्वकामार्थाः मोक्षश्रीश्च प्रवर्धते ॥
वर्षे वर्षे प्रकर्तव्यं वनभोजनमुत्तमम् ।
सर्वारिष्टाश्शमं यान्ति पुत्रलाभोऽपि जायते ॥

**Colophon:**

इति स्कन्दपुराणे भरद्वाजसंहितायां वनभोजनहोमविधिस्समाप्तः ॥

---

(*d*) **प्रदोषव्रतम्.**
PRADŌṢAVRATAM.

Foll. 26*a*—39*b*.

Similar to the work described under No. 8529 D.C.S. MSS., Vol. XVI. Extracted from the Sanatkumārasaṁhitā of the Skāndapurāṇa.

Complete.

**Beginning:**

एवङ्गुणेत्यादि ममेह जन्मनि पूर्वजन्मनि च जन्माभ्यासाज्जन्मप्रभृत्येतत्क्षणपर्यन्तं बाल्ययौवनकौमारवार्धक्येषु जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनोवाक्कायकर्मभिः ज्ञानतोऽज्ञानतश्च संभावितसकलपापानामपनोदनार्थमन्ते शिवसायुज्यप्राप्त्यर्थमुमामहेश्वरदेवतामुद्दिश्योमामहेश्वरदेवताप्रीत्यर्थं प्रदोषव्रतं करिष्ये ।

सद्योजातं त्रिनेत्रं सकलसुरनुतं कोटिसूर्यप्रकाशं
विख्यातं वामदेवं ह्युदितरविनिभं सज्जनानामघोरम् ।
शत्रूणां घोररूपं त्वनलशतनिभं तत्रिपुर्षं चिदाभ-
मीशानं शान्तरूपं स्फटिकमणिनिभं चिन्तयेत्पञ्चवक्त्रम् ॥
उमामहेश्वरं ध्यायामि ।

* * * *

सनत्कुमार उवाच—

नन्दिकेश्वर सर्वज्ञ शिवतत्त्वपरायण ।
धर्मस्वरूप सर्वेश दयापर महामते ॥
सर्वलोकोपकारार्थं व्रतं ब्रूहि दयापर ।
सर्वपापविनाशाय चतुर्वर्गफलाय च ॥

* * * *

पार्वती —

भगवन् सर्वलोकेश मम प्राणप्रिय प्रभो ।
त्रयोदशीव्रतं पुण्यं प्रदोषाख्यं सुखप्रदम् ॥
तद्विधिं तस्य पूजां च तद्व्रतोद्यापनक्रमम् ।
ब्रूहि सर्वमशेषेण सर्वभूतदयापर ॥

**End:**

कथितं च मया प्रोक्तं कुरु तत्त्वं न संशयः ।
एवं यः कुरुते मर्त्यो जन्ममध्ये सकृद्व्रतम् ॥
पुत्रपौत्रैः परिवृतो भोगान् भुक्त्वा सुरेन्द्रवत् ।
संप्राप्यायुश्च सम्पूर्णमन्ते शिवपदं व्रजेत् ॥

**Colophon:**

इति श्रीस्कान्दपुराणे उमामहेश्वरसंवादे सनत्कुमारप्रश्ने नन्दीश्वरप्रोक्त-प्रदोषव्रतकल्पस्सम्पूर्णः ॥

---

(e) शनित्रयोदशीव्रतकल्पः.

ŚANITRAYŌDAŚĪVRATAKALPAḤ.

Foll. 39b–58b.

Taken from the Skāndapurāṇa. This is similar to the work described under No. 8529 the D.C.S. of MSS., Vol. XVI. But the work under description contains Prayōga.

Complete.

**Beginning:**

शनिप्रदोषे संप्राप्ते शुक्लकृष्णेऽथवा द्विजः ।
समभ्यर्च्य शिवं कामं नरो याति न संशयः ॥
त्रयोदश्यां प्रदोषे तु पूजयेत् परमेश्वरम् ।
प्रातरुत्थाय परतः शौचं कृत्वा ततः परम् ॥
गण्डूषमुत्सृजेदादौ दन्तधावनपूर्वकम् ।
स्नानं कृत्वा ततश्शुद्धं वस्त्रं धृत्वा जितेन्द्रियः ॥
प्रातस्सन्ध्यादिकं कर्म सर्वं कृत्वा यथाविधि ।

* * * *

शनित्रयोदश्यां तस्मिन्नहनि त्रयोदशीघटिकास्तमयात्पूर्वं तिलपिष्ट-चूर्णेन स्नात्वा पूजाद्रव्याणि सङ्गृह्य शिवालये वा स्वगृहे वा अष्टोत्तर-सहस्रं वाऽष्टोत्तरशतं वाऽष्टोत्तरदीपान् प्रज्वाल्य स्थिरासने उपविश्याचम्य एवङ्गुण . . . तिथौ ममेह जन्मनि जन्मान्तरे च ज्ञानतोऽज्ञानतश्च कृता-शेषपातकोपपातकपरिहारार्थमन्ते कैवल्यसिद्ध्यर्थं श्रीभवानीशङ्करदेवतामुद्दिश्य भवानीशङ्कर(प्रीत्य)र्थं स्कन्दपुराणोक्तकल्पोक्तप्रकारेण यावच्छक्त्या ध्याना-वाहनादिषोडशोपचारेण शनिप्रदोषव्रतपूजां च करिष्ये। मूलमन्त्रेण षडङ्ग-न्यासं कृत्वा मूलं जपित्वा तत्र गणपतिपूजां कृत्वा

**End:**

विराड्विमानमारूढो चरति शङ्करस्स्वयम् ।
भक्त्या शनित्रयोदश्यां प्रदोषे च इदं पठेत् ॥
ये शृण्वन्ति सततं ये पठन्ति च मानवाः ।
ते सर्वे पापनिर्मुक्ता यास्यन्ति परमां गतिम् ॥

**Colophon:**

इति श्रीस्कन्दपुराणे ऋषिस्कन्दसंवादे शनित्रयोदशीव्रतकल्पस्संपूर्णः ।

(*f*) पार्थिवपूजा.
PĀRTHIVAPŪJĀ.

Foll. 59*a*—61*b*.

Deals with the daily worship of God Śiva made of sand; as described in Bhaviṣyōttarapurāṇa.

Complete.

**Beginning:**

पूर्वोक्त + थौ ममेह जन्मनि जन्मान्तरेषु बाल्ययौवनकौमारवार्ध-केषु मनोवाक्कायकर्मभिः ज्ञानाज्ञानकृतदोषपरिहारार्थमन्ते कैवल्यपदसिद्ध्यर्थं श्रीपार्थिवेश्वरस्वामिदेवतामुद्दिश्य श्रीपार्थि . . . र्थं पार्थिवपूजां करिष्ये ।

आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ।
कुरु घण्टारवं तत्र देवताह्वानलाञ्छनम् ॥

अपसर्पन्तु ये भूता + ते ।

ओं स्योना पृथि + थः इति भूमिं प्रार्थ्य तदङ्गकलशपूजां गणपतिपूजां पुनः भूप्रार्थना ।

सर्वाधारे धरे देवि त्वद्रूपां मृत्तिकामिमाम् ।
ग्रहीष्यामि प्रसन्नाभूर्लिङ्गार्थं मम सुव्रते ॥

**End:**

रुद्रो मृडः पशुपतिः क्षमस्व परमेश्वर ।
इति स्तुत्वा प्रणम्याथ जले लिङ्गं विसर्जयेत् ॥ इति ।

ओं हर इति त्रिवारं कपोलताडनमङ्गुष्ठानामिकाभ्यां कुर्यात् ।

प्रथमं कायशुद्ध्यर्थं द्वितीयं धर्मसंग्रहम् ।
तृतीयं मोक्षमाप्नोति एवं तीर्थं त्रिधा पिबेत् ॥

**Colophon:**

इति भविष्योत्तरपुराणोक्तप्रकारेण पार्थिवपूजाविधिः संपूर्णः ॥

---

(*g*) अश्वत्थोपनयनविवाहकल्पः.
AŚVATTHŌPANAYANAVIVĀHAKALPAḤ.

Foll. 60*b*—64*b*.

Deals with the ceremony of Upanayana and marriage celebrated to an Aśvattha tree.

Complete

**Beginning:**

मार्गशीर्षाद्युक्तमासे अश्वत्थोपनयनविवाहौ कुर्यात् । तत्रायं क्रमः— यजमानः प्रातरभ्यङ्गस्नानं कृत्वा शुभादने सुमुहूर्ते सुलग्ने चन्द्रताराबलयुते सङ्कल्पं कुर्यात् । ममेह जन्मनि जन्माभ्यासजन्मप्रभृत्येतत्क्षणपर्यन्तं बाल्य-यौवनकौमारवार्द्धकेषु जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनोवाक्कायकर्मभिस्सर्वेष-पापानामपनोदनार्थं मया स्थापिताश्वत्थच्छेदविद्युदादिच्छेददोषपरिहारार्थं मम समस्तपापक्षयार्थमपवर्गपदप्राप्त्यर्थं साक्षाद्विष्णुलोकावाप्त्यर्थमश्वत्थनारायण-देवतामुद्दिश्याश्वत्थनारायणदेवताप्रीत्यर्थमेनद्वृक्षस्य काकविष्ठाजातदोषपरिहारार्थ-मेतदश्वत्थवृक्षे सर्वामरस्थानयोग्यतासिद्ध्यर्थं काकमलजाताश्वत्थकर्म कारिष्यां माण एतदश्वत्थवृक्षस्य चौलोपनयनविवाहाख्यं कर्म कारिष्यमाणः तदादौ शुद्ध्यर्थं वृद्ध्यर्थं महाजनैस्सह स्वस्तिपुण्याहवाचनं करिष्ये । पूर्वो . . . थौं यजमानस्य सहकुटुम्बक्षेमस्थैर्यविजयायुरारोग्यैश्वर्याभिवृद्ध्यर्थं धर्मा-र्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थं मया स्थापिताश्वत्थवृक्षस्य विद्युदादि-छेददोषपरिहारार्थं

* * * *

ग्रहयज्ञपुरस्सरं तच्छान्तिहोमाख्यं कर्म करिष्ये ।

* * * *

दीनान्धकृपणादीनां भोजनं भूरिदक्षिणा ।
एवं यः कुरुते भक्त्या काकोत्थाघविवर्जितः ॥
धनधान्ययुतो मर्त्यो राज्यसौभाग्यसम्पदः ।
पुत्रपौत्रैः परिवृतो सुखी भवतु सर्वदा ॥

**Colophon:**

इति श्रीरुद्रयामले काकमलजाताश्वत्थदोषशान्तिविधिस्समाप्तः ।

* * * *

**End:**

अश्वत्थसमीपं गत्वा कर्ता दक्षिणहस्तेनाश्वत्थमुपस्पृश्य सोमः प्रथम इति सूक्तं जपित्वा ब्राह्मणान् दक्षिणाभिः फलदानैस्तोषयित्वा ब्राह्मणान् भोजयित्वा इत्याह भगवान् बोधायनः । आचार्यपूजां कृत्वाऽऽचार्याय गोप्रदानं कुर्यात् ।

**Colophon:**

अश्वत्थविवाहविधिस्संपूर्णः ।

(*h*) गोदानविधिः.

GŌDĀNAVIDHIḤ.

Foll. 74*b*—76*a*.

Describes the procedure in connection with the gift of a cow which is considered to be the most sacred animal

Comlpete

**Beginning:**

गोपूजाविधिरुच्यते —

पूर्वोक्त + थौ सवत्सगोरोमरूपसङ्ख्यावर्षब्रह्मलोकसुखनिवाससिद्ध्यर्थं सौवर्णप्रासादरत्नोज्ज्वलाख्याम्बरान्वितस्वर्गलोकप्राप्तिकामः श्रीमहाविष्णुप्रीतिं कामयमानः फलापेक्षसहितशिवरूपमोक्षकामः गोप्रदानमहं करिष्ये इति सङ्कल्प्य, ब्राह्मणं वरयित्वा सवत्सां गां पूजयेत् ।

गोभ्यो यज्ञाः प्रवर्तन्ते गोभ्यो देवास्समुत्थिताः ।
गोभिर्वेदास्समुद्गीर्णाः षडङ्गं च पदक्रमाः ॥
सर्वपापहरा धेनुस्सर्वमङ्गलदायिनी ।
संसारतारणायास्य शिवं पुण्यं ददासि मे ॥

**End:**

कपिले सर्वभूतानां पूजनी च सरोहिणी ।
सर्वतीर्थमयी यस्मात्तनश्शान्तिं प्रयच्छ मे ॥
क इदं गवां प्रतिगृह्णातु गवा प्रतिगृह्णामि ।

**Colophon:**

इति गोप्रदानविधिस्संपूर्णः ।

---

(*i*) अश्वत्थोपनयनविधिः.

AŚVATTHŌPANAYANAVIDHIḤ.

Foll. 76*b*—78*b*.

Same work as that described under No. 8212 of the D.C.S. MSS., Vol. XVI. By Śaunaka.

Complete.

---

(*j*) अश्वत्थोपनयनप्रयोगः.

AŚVATTHŌPANAYANAPRAYŌGAḤ

Foll. 78*b*—82*a*.

Describes the Prayōga for the above Vidhi.

Complete.

**Beginning:**

अथ प्रयोगविधिरुच्यते--शुभेऽहनि उदगयने शुक्लपक्षे चन्द्रतारानुकूले दम्पती मङ्गलस्नानं कृत्वा धौतवस्त्रं धृत्वा शक्त्यनुसारेणालङ्कृत्य ब्राह्मणानाहूय वेदघोषैस्सह नृत्तगीतवाद्यादिसुवासिनीपुरस्सरं यागद्रव्याणि पूजाद्रव्याणि च संगृह्याश्वत्थसमीपं गत्वा पादौ प्रक्षाल्याचम्य ब्राह्मणैरनुज्ञातो विनायकं संपूज्य, एव . . . तिथौ अस्य देवदेवस्य श्रीमदश्वत्थनारायणदेवस्य प्रीत्यर्थं श्रीमदश्वत्थनारायणप्रसादेन दशपूर्वेषां दशापरेषां मद्वंश्यानां सर्वेषां पितॄणां नरकादुत्तीर्य शाश्वतब्रह्मलोके सुखनिवासप्राप्त्यर्थं श्रीमदश्वत्थनारायणस्य नान्द्यावाहनाख्यं कर्म करिष्यमाणः उपनयनविवाहाख्यं कर्म करिष्यमाणः तदङ्गमभ्युदयं करिष्यमाणः तदादौ शुद्ध्यर्थमभ्युदयार्थं च महाजनैस्सह पुण्याहवाचनकर्म करिष्ये ।

**End:**

अश्वत्थाच्छादितं वस्त्रं कुण्डलं यज्ञोपवीतमाचार्याय दद्यात् । अन्येभ्यो विप्रेभ्यस्स्वर्णवस्त्रादीनि दद्यात् । यथाशक्ति ब्राह्मणान् भोजयेदाशिषो वाचयित्वा स्वयं च बन्धुभिस्सह भुञ्जीयात् ।

**Colophon:**

इत्युपनयनप्रयोगविधिस्समाप्तः ।

---

(*k*) अश्वत्थविवाहकल्पः.

AŚVATTHAVIVĀHAKALPAḤ.

Foll. 82*a*—84*a*.

Same work as that described under No. 8208 of the D.C.S. MSS., Vol. XVI But with slightly different readings in the end as given below:

Complete.

**End:**

सर्वदेवमयो यस्मादश्वत्थो मुनिभिःस्मृतः ।
तस्माद्विवाहः कर्तव्य इत्याहुः ऋषयो मताः ।
कोटिविप्रविवाहेन यत्फलं लभते भुवि ।
अश्वत्थस्य विवाहेन तत्फलं लभेत नरः ॥

एवं श्रुत्वा धर्मराजः कृतवान्नैमिशे वने ।
विवाहं पिप्पलस्यापि ततो मोक्षं जगाम सः ॥

**Colophon:**

इति श्रीभविष्योत्तरपुराणे कृष्णयुधिष्ठिरसंवादे अश्वत्थविवाहकल्पस्संपूर्णः।

---

(l) अश्वत्थविवाहविधिः.
AŚVATTAVIVĀHAVIDHIḤ.

Foll. 84a—88b.
Similar to the above ; by Śaunaka.
Complete.

**Beginning:**

श्रीकृष्ण उवाच—
मार्गशीर्षे माघमासे वैशाखे कार्तिकेऽपि वा ।
विवाहं कारयेदेवं पिप्पलस्य महत्फलम् ॥

एवंप्रकारेण कल्पोक्तमासे चन्द्रतारानुकूले शुभदिने सुलग्ने पूर्वाह्णे अश्वत्थविवाहं कुर्यात् । दम्पती मङ्गलस्नानं कृत्वा धौतवस्त्रं परिधाय नूतनवस्त्रमङ्गलसूत्रादिमङ्गलद्रव्याणि संगृह्य मङ्गलतूर्यादिवेदघोषसुवासिनीपुरस्सरं बन्धुजनैस्सहाश्वत्थसमीपं गत्वा ।

**End:**

अश्वत्थविवाहाङ्गगोदानमाचार्याय दद्यात् ।
गवामङ्गेषु तिष्ठन्ति + यच्छ मे ॥

अन्येन्यो विप्रेभ्यो दक्षिणताम्बूलादिकं दत्वा, आशीर्वचनं गृह्णीयात् । ब्राह्मणान् भोजयित्वाशिषो वाचयेत् ॥

**Colophon:**

इत्यश्वत्थोपनयनविवाहविधिः शौनकीये संपूर्णः ।

---

(m) नागप्रतिष्ठाविधिः.
NĀGAPRATIṢṬHĀVIDHIḤ.

Foll. 88b—95a.

Similar to the work described under No. 3352 of the D.C.S. MSS., Vol. VI.

Complete.

**Beginning.**

अथ नागप्रतिष्ठाविधिरुच्यते—

अथ नागप्रतिष्ठापनविधिं व्याख्यास्यामः । पुत्रकामः काकवन्ध्यः कदलावन्ध्यः मृतवन्ध्यः शुद्धवन्ध्यः पुरुषो वा नारी वा पिशाचब्रह्मराक्षसादिदुष्टग्रहाभयपीडितप्रतिबन्धादिसकलरोगनिवृत्तिद्वारा नागप्रतिष्ठां चिकीर्षुः मौढ्यादिदोषवर्जिते श्रावणकार्तिकमार्गशिरमाघफाल्गुनचैत्रवैशाखज्येष्ठमासेषु शुक्लपक्षे चन्द्रतारानुकूलशुभदिने कुर्यात् ।

**End.**

दश दानानि दत्वा पादौ प्रक्षाल्याचम्यान्यवस्त्राणि धृत्वा तद्वस्त्राणि विसृज्य नियमाष्टब्राह्मणान् वस्त्राभरणादिभिस्समभ्यर्च्याशिषो वाचयित्वा शतं वा पञ्चशतं वा सहस्रं वा ब्राह्मणान् भोजयित्वा तदभावे स्वशक्त्या ब्राह्मणभोजनं कुर्यादाशीर्वचनं गृह्णीयात् ।

**Colophon:**

इति नागप्रतिष्ठाविधिस्संपूर्णः ।

---

(*n*) काकमलोद्भवशान्तिः.

KĀKAMALODBHAVAŚĀNTIḤ.

Foll. 95*b*—99*a*.

Deals with the ceremony of sanctifying the Aśvattha tree that has been made unholy by the excreta of crows. As laid down by Śaunaka

Complete.

**Beginning:**

काकमलोद्भवशान्तिविधिरुच्यते । हेमाद्रौ शौनकः—

सूत द्विज महाभाग सर्वपापप्रणाशनम् ।
अश्वत्थस्योपनयनं विवाहश्च महत्तरः ॥
अश्वत्थस्थापनं चैव पितृणां मुक्तिहेतवे ।
सर्वाभीष्टप्रदं नृणां दीर्घमायुष्यवर्धनम् ॥

सप्तजन्मकृतं पापं ब्रह्महत्याविनाशनम् ।
शान्तिहोमं प्रवक्ष्यामि यथोक्तं च विधानतः ॥

कर्ता मङ्गलस्नानं कृत्वा गीतवादित्रादिना वेदघोषैस्सह शान्तिकल्पद्रव्याण्यादाय ब्राह्मणैस्सहाश्वत्थसन्निधिं गत्वा शुभदिवसे शुभमासे शुभ मानस्थ चन्द्रताराबलान्विते प्राणानायम्यास्माकं + र्थम् अश्वत्थोपनयनविवाहप्रतिष्ठापनार्थं काकमलोद्भवशान्तिकर्म करिष्यमाण इति पुण्याहं वाचयित्वा ।

**End:**

काकमलोद्भवशान्तिद्वारा कृतवस्त्रप्रतिमादानं करिष्ये । पूर्वनियमप्रकारेण दानं कृत्वा षोडशोपचारपूजां कृत्वा ।

मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे ।
अग्रतश्शिवरूपाय वृक्षराजाय ते नमः ॥ इति प्रार्थना ॥

**Colophon:**

शौनकीये काकमलोद्भवशान्तिविधिस्संपूर्णः ।

---

(*o*) अश्वत्थप्रतिष्ठोपनयनविधिः.

ASVATTHAPRATIṢṬHŌPANAYANAVIDHIḤ.

Foll. 99*a*—101*b*.

Same work as that described under No. 8212 of the D.C.S. MSS. Vol. XVI. Though with different readings in the beginning and end.

Complete.

**Beginning:**

अश्वत्थप्रतिष्ठाविधिरुच्यते—

प्राणप्रतिष्ठा, ब्रह्मणो ते ब्रह्मयुजा युनज्मीति मन्त्रेण ब्राह्मणमावाहयामि । इदं विष्णुः . . . सुर, विष्णु . . . मि कद्रुद्रायेति रुद्र . . मि . अमृतं वै प्राणाः . . . ह्वयते स्वामिन् सर्वजगन्नाथ . . . कुरु आवाहितो . . . भव . . . भव ।

**End :**

विष्णोर्नुकमिति ऋचा त्रियम्बकमिति एतान् मन्त्रान् जपेत् ।

सुवर्णं रजतं वापि तदभावे ताम्रकं तथा ।
त्रिशूलं दीक्षं दत्वा च पिशाचास्तस्य नाशनीम् ॥ ?

**Colophon :**

इति श्रुतिमार्गेणाश्वत्थोपनयनविधिस्संपूर्णः ।

---

(*p*) अश्वत्थविवाहविधिः.

ASVATTHAVIVĀHAVIDHIḤ.

Foll. 101*b*—103*b*.

Same work as that described under No. 8208 of the D.C.S. MSS., Vol. XVI.

Complete.

---

(*q*) अश्वत्थविवाहप्रयोगः.

ASVATTHAVIVĀHAPRAYÔGAḤ.

Foll 103*b*.

Deals with the Prayōga for celebrating marriage to the Asvattha tree ; As laid down by Āsvalāyana.

Complete.

**Beginning :**

अश्वत्थविवाहप्रयोगविधिरुच्यते —

शौनकः —

विवाहस्तिथिवारे च नक्षत्रे च सुलग्नके ।
यजमानोऽनुकूले च चन्द्रताराबलान्विते ॥
भानुवारसमायुक्त भौममिन्दुविवर्जिते ।

अस्मिन् दिने स्वशाखोक्तविधिना अश्वत्थविवाहं कुर्यात् । ग्रामात्प्रदीचीमुदीचीं वा दिशमुपनिष्क्रम्य कर्ता सभार्यः मङ्गलस्नानं कृत्वा पूजाद्रव्याणि विवाहद्रव्याणि चादाय कर्ता बन्धुभिस्सह गीतवाद्यादिघोषैरश्वत्थसमीपं गत्वा ।

**End :**

कङ्कणविसर्जनं कृत्वा तत आचार्यब्रह्मर्त्विजौ, आचार्याय वस्त्रालङ्कारसहितं सवत्सां गां च दद्यात् । यथाशक्ति षोडशमहादानानि कुर्यात् । ब्राह्मणान् भोजयित्वा, आशिषो वाचयित्वा ।

**Colophon :**

इत्याश्वलायनोक्ताश्वत्थोपनयनविवाहविधिस्संपूर्णः ।

---

(*r*) कलशस्थापनविधिः.

KALAŚASTHĀPANAVIDHIḤ.

Foll. 106*a*—112*b*.

On the installing of a Kalaśa (a vessel with water) as a preliminary to the observance of certain religious rites.

Complete.

**Beginning :**

कलशस्थापनविधिरुच्यते—

आदौ घण्टानादं गणपतिपूजा, तत आचार्यः ऋत्विग्वरणं कृत्वा ततः अन्यं ब्राह्मणमस्मिन् कर्मणि ब्रह्माणं त्वां वृणीमहे, पञ्चप्रस्थव्रीहिधान्यं प्रत्येकं निक्षिप्य तत्पार्श्वतः प्रस्थतिलधान्यराशिं कृत्वा, व्रीहिधान्यराश्योरुपरि प्रस्थतण्डुलोपरि प्रधानकलशं निधाय । तत्रोपरि चतुर्दशदलपद्मं लिखित्वा ।

**End :**

दीर्घदंष्ट्रायै नमः नीराजनम् । अघोरविक्रमायै नमः मन्त्रपुष्पम् । विकृतशरीरायै नमः नमस्कारः । अलक्ष्मीपरिहाररूपिण्यै नमः सर्वोपचारान् । यस्य स्मृत्येति वास्तुपुरुषपूजा ।

---

(*s*) वनभोजनधात्रीहोमविधिः.

VANABHŌJANADHĀTRĪHŌMAVIDHIḤ,

Foll. 114*a*—120*a*.

Similar to the work described under (*c*) above.

Complete.

**Beginning :**

अथातस्संप्रवक्ष्यामि धात्रीपूजां विलक्षणाम् ।
वनभोजनविधिं तद्वद्धात्रीहोमं तथैव च ॥

बलिप्रदानं तत्रैव धात्र्याश्चैव प्रदक्षिणम् ।
ब्राह्मणान् भोजयेत्पश्चाद्यथावित्तानुसारतः ॥

* * * *

कार्त्तिकपूर्णिमायां धात्रीमूले दामोदरपूजां करिष्य इति सङ्कल्प्य प्रातरुत्थाय दन्तधावनादिकं कृत्वा ततो नद्यां वा तटाके वा वाप्यां वा स्नात्वा सर्वं नित्यकर्म निर्वर्त्य स्वगृहाद्वैष्णवैस्सह गीतवादित्रमहोत्सवैर्वासुदेवादिनामानि गायन् धात्रीवनं गच्छेत् । अथ शुचिर्भूतः आचान्तो धात्रीवृक्षमूले उपविश्य धात्रीछायामावृतस्सन् यथाशक्ति विरचितं सुवर्णदामोदरं निर्माय पीठासने स्थापयित्वा, तत्समीपे उपविश्य सङ्कल्पं कुर्यात् ।

**End.**

गृहं प्रवेशयेद्धीमान् बालवृद्धैश्च संयुतः ।
यथाशक्ति सुवर्णेन ब्राह्मणान् प्रीणयेत्ततः ॥
आशीर्वादं गृहीत्वा तु ब्राह्मणान् प्रेषयेत्ततः ।
भार्यया सहितो राजन् विष्णुध्यानपरायणः ॥
एवं यः कुरुते राजन् विष्णुलोकं स गच्छति ।

**Colophon:**

इति श्रीभरद्वाजसंहितायां धात्रीहोमवनभोजनविधिर्नाम षट्त्रिंशोऽध्यायः ॥

---

R. No. **5435.**

**Palm-leaf.** 14 × 1 inches. Foll. 14. Lines, 6 in a page. Telugu Injured.

Purchased in 1928-29 from M.R.Ry. N. K. Vakulābharaṇam Madras.

## भैष्मीपरिणयचम्पूः

BHAIṢMĪPARIṆAYACAMPŪḤ.

Same work as that described under No. 12335 of the D.C.S. MSS., Vol. XXI, wherein see for the beginning. By Ratnakhēṭa Srīnivāsamakhin, son of Lakṣmīdhara of Viśvāmitragōtra.

Complete.

**End:**

अथ विमुखे शिशुपाले मित्रमण्डले च गगनतलमध्यमधिरूढे कान्दिशीके जरासन्धादिराजके

रुक्मिण्यपि च रुक्मी च गुणभावेन संयुतः ।
कृष्णं सप्रमदं चक्रे गतमानोन्नतिस्तदा ॥

ततश्च बलभद्रेण मोदितो रुक्मी पूजया सह भोज्यकटकं, कृष्णोऽपि भैष्म्या सह द्वारकां, कविरयं रत्नखेटोऽपि कीर्त्या रतिं प्रविश्य कृतार्थतामगमन् ।

तावुभौ श्लाघ्यसुरतौ श्यामौ सप्रमदोज्ज्वलौ ।
श्रीरुक्मिणीवासुदेवौ रेजतुर्द्वारकापुरे ॥

**Colophon:**

इति विश्वामित्रकुलजलधिकौस्तुभश्रीरत्नखेटदीक्षितकृतौ भैष्मीपरिणयाभिधोऽयं ग्रन्थः समाप्तः ॥

---

R. No. **5436.**

Palm-leaf. 16⅜ × 1 inches. Foll. 112. Lines, 7 in a page. Telugu. Slightly injured.

Purchased in 1928–29 from M.R.Ry. N. K. Vakulābharaṇam Madras.

प्रसन्नराघवव्याख्या—फलवती.

PRASANNARĀGHAVAVYAKHYĀ: PHALAVATĪ.

Same work as that described under R. No. 2446 ante. By Narasiṁhapaṇḍita alias Rājaraya, disciple of Vēṅkaṭācārya.

Complete.

---

R. No. **5437.**

Palm-leaf. 15 × 1¼ inches. Foll. 57. Lines, 5 in a page. Telugu. Good.

Purchased in 1928–29 from M.R.Ry. N. K. Vakulābharaṇam, Madras.

दत्तरत्नप्रदीपिका.

DATTARATNAPRADĪPIKĀ.

Deals with the ceremony of adopting sons by those who have either no sons or have lost them.

Incomplete.

**Beginning:**

लक्ष्मीचरणराजीवलाक्षालक्षितवक्षसे ।
विश्वसर्गादिलीलाय वेङ्कटब्रह्मणे नमः ॥
लक्ष्मीचरणलाक्षैकलक्षणं शुभलक्षणम् ।
शेषस्थितिधराध्यक्षमम्बुजाक्षमुपास्महे ॥

इह तावत्तरति शोकमात्मविदिति श्रुत्या शरीरसंबन्धितापत्रयनिर्वापणोपायरूपतयात्मज्ञानं विधीयते । तच्च ब्रह्मविदाप्नोति परम् आत्मानमेव लोकमुपासीतेति श्रुत्यन्तरानुसारात् ब्रह्मोपासनारूपमवगम्यते । तच्च तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेनेति श्रुतिवाक्याद्यज्ञादिसाधनकं प्रतीयते । कर्मानुष्ठाननिर्मलीकृतान्तःकरणस्यैवोपासनोपयोगित्वात् । तच्च यज्ञाद्यनुष्ठानं श्रौताग्निसाध्यं निश्चीयते । अग्नयश्चाग्नीनादधीतेत्यादिविधिष्वाधानसाध्याः श्रुताः । तच्चाधानं जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यादौ पुत्रवत्पुरुषकर्तव्यतया च बोध्यते इत्येवमर्थमभिमत्य अपुत्रस्य गतिर्नास्ति प्रेत्य चेह च सत्तमेत्यादिस्मृतयः प्रवर्तन्ते । पुन्नाम्नो नरकात्त्राता पुत्र इत्यभिधीयते इति वचनमप्यत्रैवानुकूलम् । तस्मात्पुत्रवत्त्वमैहिकामुष्मिकसकलसमृद्धिरिति श्रेयःप्रेप्सुनावश्यं पुत्रवता भाव्यम् । ते तु पुत्रा द्वादशविधाः धर्मशास्त्रेष्वाम्नाताः । यथा—

औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयं दत्तश्च शौद्रश्च षट् च दायादबान्धवाः ॥ इति ।

**End:**

अपुत्रो मृतपुत्रो वा पुत्रार्थं समपोष्य चेत्यादौ अपुत्रत्वमृतपुत्रत्वान्यतरस्यैव पुत्रप्रतिग्रहनिमित्ततास्मरणात् । विधुरस्य कृतक्रियपुत्रनाशे मृतपुत्रत्वरूपनिमित्तात् पुत्रप्रतिग्रहाधिकारवत् स्त्रिया अपि विधवायाः कृतक्रियपुत्रनाशे मृतपुत्रत्वरूपनिमित्तात् दत्तपुत्रप्रतिग्रहाधिकारो धर्मशास्त्राविरुद्धः ।

R. No **5438**.

Palm-leaf. 16 × 1¼ inches. Foll. 141. Lines, 6 in a page. Telugu. Good.

Purchased in 1928–29 from M.R.Ry. N. K. Vakulābharaṇam, Madras.

बालभारतम् , मनोहराव्याख्यासहितम्.

BĀLABHĀRATAM WITH THE COMMENTARY MANOHARĀ.

Same text and commentary as that described under Nos. 11608 and 11611 respectively of the D.C.S. MSS., Vol. XX: wherein see for the end. By Agastya and Sālva Timmavadaṇḍanātha.

Contains the first and third Sargas complete with commentary. The second Sarga text only complete.

**Beginning**

(मू)—

अस्त्यत्रिनेत्रप्रभवः कलात्मा शशीति नक्षत्रगणाधिनाथः ।
यं त्रारिजश्रीहरमाप्तवाचो वामं हरेर्लोचनमामनन्ति ॥

(व्या)—

इह खलु कोलचलमल्लिनाथस्य सूनुः पेद्दननामकः काव्यपञ्चक व्याख्यानं पुरा कृतवान् कठिनोक्तिभिः । इदानीं पदवाक्यप्रमाणज्ञो भगवानगस्त्यपण्डितः कविः

नटाकं धननिक्षेपं बृहत्काव्यं शिवालयम् ।
वनानि सत्कृतिः पुत्रः सप्त सन्ततयः स्मृताः ॥
एतान् सम्पादयेद्धीमानिहामुत्र फलाप्तये ।

इति पुराणवचनप्रामाण्यात् काव्यरूपसन्तानस्यैहिकामुष्मिकसाधनतां "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ।" इत्यालङ्कारिकवचनात् काव्यस्य यशःप्रभृत्यनेकानुषङ्गिकफलसाधनतां काव्यालापांश्च वर्जयेदिति निषेधस्यासत्काव्यविषयतां च पश्यन् बालभारताख्यं महाकाव्यं पेशलरूपं बालानां बुद्धिं साधयितुं परोपकारार्थं चिकीर्षुश्चिकीर्षितस्य ग्रन्थस्याविघ्नपरिसमाप्तये "मङ्गलाचारयुक्तान

विनिपातो न विद्यते ।" इति मङ्गलस्य विघ्नपरिसमाप्तिहेतुतया देवतागुरुपूजास्तुतिनमस्कारादीनां मङ्गलात्मकतया ग्रन्थादाववश्यं कर्तव्यत्वेन "आशीर्नमस्क्रिया वस्तुनिर्देशोवापि तन्मुखमित्यालङ्कारिकवचनात्", अत्र वस्तुनिर्देशस्यापि प्रयोगमुखत्वात् भारतवंशनिदानभूतं सोमात्मकं वस्तु निर्दिशन् तद्गुणस्तुतिरूपमङ्गलमादौ निबध्नाति ।

* * * *

**Colophon:**

इति श्रीमद्राजाधिराजराजपरमेश्वरकर्णाटेश्वरश्रीकृष्णरायसार्वभौमशिरःप्रधानसकलागमपारावारपारीणश्रीसाल्वतिम्मणदण्डनाथविरचितायां बालभारतव्याख्यायां प्रथमः सर्गः ।

**End:**

परिपूर्वात् नयतेर्लट् । उपसर्गादसमासेऽपीति णत्वम् । वसन्ततिलका वृत्तम् ।

**Colophon:**

इति श्रीमद्राजाधिराजराजपरमेश्वरकर्णाटेश्वरश्रीकृष्णरायशिरःप्रधानसकलागमपारावारपारीणश्रीतिम्मणदण्डनाथविरचितायां बालभारतव्याख्यायां मनोरमाख्यायां तृतीयः सर्गः ।

---

## R. No. 5439.

Palm-leaf. 16½ × 1½ inches. Foll. 117. Lines, 6 in a page. Telugu. Slightly injured.

Purchased in 1928–29 from M.R.Ry. N. K. Vakulābharaṇam, Madras.

(*a*) अलङ्कारकौस्तुभः

ALAṄKĀRAKAUSTUBHAḤ.

Foll. 1*a*—46*b*.

Same work as that described under No. 12785 of the D.C.S. MSS., Vol. XXII. By Veṅkaṭācārya, son of Aṇṇayācārya of Tirumala Bukkapaṭṭanam.

**Complete.**

(*b*) शृङ्गारतरङ्गिणी.

ŚṚṄGĀRATARAṄGIṆĪ.

Foll. 47*a*—107*a*.

A drama written by Veṅkaṭācārya, son of Aṇṇaya Guru, and the younger brother of Śrīnivāsatātācārya. The author seems to have been a Court Paṇḍit of Veṅkaṭapati Nāyaka, son of Pāmanāyaka.

Breaks off in the fifth act.

**Beginning:**

जातस्सात(श्शीत)मरीचिरस्य हृदयादित्यागमेषु श्रुतं
भानुर्नूनममुं नुदन्नुदयते हार्दं तमिस्रं त्विति ।
शङ्कामङ्कुरयन्तमाश्रिततनेर्यः कौस्तुभं वक्षसा
धत्ते स्मेरकृपाविपाकललितः कृष्णः स पुष्णातु नः ॥

किञ्च—

नीलश्रीरलकेषु शङ्खगरिमा कण्ठे कुचे माकरी
रेखा कुन्दवरद्युतिः स्मितसुधाकान्तेषु दन्तेषु च ।
पादौ कच्छपभूषितौ करयुगं यस्याः सपद्मं महा-
पद्मानन्दमयी मुकुन्दरमणी सद्यः प्रसद्यान्मम ॥

(नान्द्यन्ते सूत्रधारः)—

सहर्षम् । अधुना खल्वरविन्दनन्दनचन्द्रधरपुरन्दरमुखनिखिलबृन्दारकबृन्दमकुटनिकटतटघटितचिरतररत्ननिर्यत्प्रभाराजिनीराजितचरणराजीवस्य शरणागतजनमन्दिरालिन्दमन्दारस्यानन्यसामान्यमान्यतारुण्यधन्याम्बुधिराजन्यकन्यकाकुचलिकुचरचितचकचकितमकरिकापत्रचित्रचित्रितभुजान्तरालशृङ्गारनृपतिविहारगृहारोपितकौस्तुभरूपदीपधूमकलिकायमानश्रीवत्सलाञ्छनस्य चिरन्तनसरस्वतीचिकुरनिकरपरिष्कृतमल्लिकामतल्लिकापरिमलजरीजृम्भमाणकल्याणगुणनिलयस्य स्वायत्तसकलजगदुदयविभवलयलीलस्य, पराशरपाराशर्यशुकशौनकप्रमुखनिखिलमुनिजनहृदयजलरुहगुहानिवासस्य श्रीनिवासस्य सेवायामारब्धहेलभावा नित्यनिर्मलस्वभावाः परमभागवताः संमिलिताः ।

* * * *

किञ्च—

शर्वादित्त्वपरदुर्वादवादिशतनिर्वापणादिचतुरः
स्वर्वाहिनीलहरिगर्वातिरेकहृदखर्वाभिजातफणितिः ।

दुर्वारवैभवसुपर्वाधिपार्यशतपर्वातिशायिधिषणो
गुर्वागमान्तयुगनिर्वाहकृज्जयति सर्वार्थदोऽण्णयगुरुः ॥

तत्तनयेन सनयेन तच्चरणपरिचरणैकभूम्ना स्वाग्रजश्रीनिवासताताचार्यकरुणापरिणाहलब्धपूर्वतन्त्रभूम्ना वेङ्कटाचार्यनाम्ना सकलसाम्राज्यराज्यमानमाननीयलहरीपामनायककुमारवेङ्कटपतिनायकमहास्थानपाण्डित्यगुरुत्वभूषणेन विरचितमस्ति सुगुणमणि . . . कं शृङ्गारतरङ्गिणीनाटकम् । यदभिनयविशारदमनीषा अशेषा इमे शैलूषाः ।

* * * *

(ततः प्रविशतो विमानयानेन किम्पुरुषदम्पती)

मदनशेखरः-पुरतोऽवलोक्य, सखि शृङ्गारिणि,

* * * *

Colophon:

शृङ्गारतरङ्गिणीनाम्नि नाटके प्रथमोऽङ्कः समाप्तः ॥

* * * *

यतो रुक्मिण्यै पारिजातकुसुमदाननिमित्तात्कुपिता सत्यभामा । कोपागारगृहे तिष्ठतीति श्रुतम् । यदेतद्रुक्मिण्या श्रूयते तदेषा कुपिता भवेत् । उभयोरनुनयश्च कृष्णस्य दुष्करो भविष्यति ।

End:

Colophon:

इति श्रीशृङ्गारतरङ्गिणीनाम्नि नाटके चतुर्थोऽङ्कः सम्पूर्णः ।

नेपथ्ये—

भो भोः शृङ्गारोद्यानवनपालिकाः, न निवारयध्वम्—

आजन्मातितपस्विनीगुणखनिस्त्व . विशिष्टा सुता
नाम्नाऽसौ मणिचूलिका मणिकृतं पात्रैर्विचित्रैर्युतम् ।
बन्धोद्बन्धनचुञ्चुकाञ्चनमणीपाञ्चालिकायन्त्रितं
मञ्चं कंचन काशुगामिनमुपादाय क्रियायागता ॥ १

* * * *

सत्याभामाधवयोर्विश्रमक्षरणयोग्यं कुसुमिना तालवृन्तयुगलं कर्तव्यम् ।

रत्नवेणिका—तहेति तालवृन्तनिर्वापणं नाटयति ।

मञ्जुभाषिणी ।

Foll. 108—110 contain a list of MSS. in the present owner's house.

R. No. 5140.

Palm leaf. 17 × 1¼ inches. Foll. 106 Lines, 6 in a page. Telugu Good.

Purchased in 1928-29 from M.R.Ry. N. K. Vakulābharaṇam, Madras.

(*a*) वामनजयन्तीव्रतकल्पः

VĀMANAJAYANTIVRATAKALPAḤ.

Foll. 1*a*—8*a*.

Similar to the work described under No. 8494 of the D.C.S. MSS., Vol. XVI.

Complete.

**Beginning :**

एवङ्गुण + तिथौ अस्माकं + ध्यर्थं समस्तपापक्षयार्थं वामनजयन्तीकल्पोक्तप्रकारेण यावच्छक्त्या ध्यानावाहनादिकल्पोक्तपूजां च करिष्ये ।

आगमार्थं तु । गणानां त्वा गणपतिम् । कलशाराधनम् । अनन्तरं प्राणप्रतिष्ठापनम् । कुसुमाक्षतान् गृहीत्वा,

पूजाविधिमहं वक्ष्ये समासेन नराधिप ।
सर्वसम्पत्करीं पुंसां भुक्तिमुक्तिफलप्रदाम् ॥
दध्योदनं पूर्णपात्रममृतं कलशं तथा ।
बिभ्राणं वामनं ध्यायेच्चन्द्रमण्डलमध्यगम् ॥
एह्येहि भगवन्नाथ एह्येहि दधिवामन ।
व्रतसंपूर्तये मेऽद्य सन्निधिं कुरु माधव ॥

वामनाय नमः ।

**End :**

इदं व्रतं महापुण्यं वामनस्य सुतारकम् ।
त्रैलोक्यपुष्टिदं नित्यमृषीणां पूजितं पुरा ॥
इदमाख्यानमायुष्यं श्रावयेच्छृणुयान्नरः ।
सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥

**Colophon :**

इति श्रीभविष्योत्तरपुराणे श्रवणद्वादशं नाम वामनजयन्तीव्रतकल्पं संपूर्णम् ।

(b) मासशिवरात्रिपूजाविधिः

MĀSAŚIVARĀTRIPŪJĀVIDHIḤ.

Foll. 8a—10a.

Similar to the work described under No. 8414 of the D.C S. MSS., Vol. XVI.

Complete.

**Beginning:**

पूर्वोक्त + थौ ममेह जन्मनि + सिद्ध्यर्थं साम्बसदाशिवदेवतामुद्दिश्य + थं कल्पोक्तप्रकारेण ध्यानावाह + करिष्ये ।

आगमार्थं + लाञ्छनम् । कलशपूजा । प्राणप्रतिष्ठा, सुवर्णशिवलिङ्गमादाय तत्र प्राणप्रतिष्ठां पूजां च कुर्यात् ।

**End:**

विश्वेशाय विशेषाय नमस्तस्मै चिदात्मने : नमो भवायेति नमस्कारः । भवस्य देवस्य पत्न्यै नम इति तर्पयित्वा यस्य स्मृत्येति वरदो भवत ।

**Colophon:**

इति पूजाविधानं संपूर्णम् । कथाश्रवणम् ।

---

(c) मासशिवरात्रिव्रतकल्पः.

MĀSAŚIVARĀTRIVRATAKALPAḤ.

Foll. 10a—13a.

Same work as that described under No. 8415 of the D.C.S. MSS., Vol. XVI.

Incomplete.

---

(d) गोपद्मव्रतपूजाविधानम्.

GŌPADMAVRATAPŪJĀVIDHĀNAM.

Foll. 13b—16a.

Deals with the manner of conducting Gōpadmavrata, generally performed by newly married girls.

Complete.

**Beginning:**

पूर्वो + थौ अस्माकं + द्ध्यर्थं पुत्रपौत्रसमस्तमनोवाञ्छाफलसिद्ध्यर्थं कल्पोक्तप्रकारेण गोपद्मव्रतं करिष्ये । कलशार्चनम् । प्राणप्रतिष्ठापनम् । कुसुमाक्षतान् गृहीत्वा ।

कृष्णाय यादवेन्द्राय ज्ञानमुद्राय योगिने ।
नाथाय रुक्मिणीशाय नमो वेदान्तवेदिने ॥

श्रीकृष्णाय नमः । ध्यानम् ।

**End :**

नमस्ते देवदेवेश नमस्ते करुणाकर ।
इदमर्घ्यं प्रदास्यामि नमस्ते सुगदाधर ॥ पुनरर्घ्यम् ।

व्रतसाद्गुण्यार्थं गोदानम् । तत उपायनदानम् ।

चातुर्मास्ये तु संप्राप्ते कृष्ण इत्यधिदेवता ।
उपायनं प्रदास्यामि त्रयस्त्रिंशदपूपकान् ॥

**Colophon :**

इति पूजाविधानं संपूर्णम् ।

---

(*e*) गोपद्मव्रतकल्पः.

GŌPADMAVRATAKALPAḤ.

Foll. 16*a*—17*b*.

Same work as that described under No 8291 of the D.C.S. MSS., Vol. XVI; but with different end as given below.

Complete.

**End :**

ये कुर्वन्ति व्रतमिदं लभन्ते फलमुत्तमम् ।
इह भुक्त्वा सुखं चान्ते विष्णुसायुज्यमाप्नुयात् ॥

**Colophon :**

इति श्रीपद्मपुराणे गोपद्मव्रतकल्पं संपूर्णम् ।

---

(*f*) गोपद्मव्रतोद्यापनविधिः.

GŌPADMAVRATODYĀPANAVIDHIḤ.

Fol. 18*a*.

Deals with the ceremony to be performed on the completion of Gōpadmavrata.

Complete.

**Beginning :**

समाप्ते पञ्चमे वर्षे कुर्यादुद्यापनं ततः ।
मद्रूपप्रतिमां हेम्ना कर्षमात्रेण कारयेत् ॥
अशक्तश्चेत्तदर्धेन तदर्धार्धेन कारयेत् ।
केवलाशक्तविषये यथाविभवसारतः ॥

**End :**

इति तस्य वचः श्रुत्वा सुभद्रा प्रीतिमादरात् ।
कृत्वा पुण्यं तदा लेभे नात्र कार्या विचारणा ॥

**Colophon :**

इति श्रीपद्मपुराणे गोपद्मव्रतोद्यापनकल्पस्संपूर्णः ।

---

(*g*) गोपद्मव्रतोद्यापनप्रयोगः.
GŌPADMAVRATŌDYĀPANAPRAYŌGAḤ.

Foll. 19*a*—19*b*.

Deals with the procedure in relation to the ceremony that should be performed after finishing the Gōpadmavrata.

Complete.

**Beginning :**

कार्तिकशुक्लद्वादशी(श्यां) प्रातःकाले उत्थाय स्नात्वा ऋत्विग्वरणं कृत्वा आचार्यं नियम्य, स्वशाखोक्तप्रकारेणाग्निप्रतिष्ठापनं कृत्वा चक्षुष्यन्तीं कृत्वा ।

**End :**

आशीर्वचनमादाय कलशवस्त्रप्रतिमां गां चालङ्कारेण सहाचार्यं तोषयित्वा, इतरेषां दक्षिणाताम्बूलानि दद्यात् ।

**Colophon :**

इति गोपद्मव्रतोद्यापनविधिस्संपूर्णः ।

---

(*h*) पात्रादिलक्षणम्.
PĀTRĀDILAKṢAṆAM.

Fol. 19*b*.

Deals with the nature of the vessels etc., that should be used in connection with the performance of Sandhyāvandana etc..

Incomplete.

**Beginning :**

सन्ध्यावन्दनपात्राणि द्विमुखी पञ्चपात्रकम् ।
कांस्यपात्रं तथा पात्रं वर्तुलं च प्रशस्यते ॥
पितृणां तर्पणं चैव कुरुते यदि यो नरः ।
तेषां तृप्तिकरं नित्यं पात्राणामुत्तमं सदा ॥

**End :**

विभूतिधारणं विप्रो धारयेत्सर्वदा नृप ।
ललाटे तु त्रिपुण्ड्रं च धारयेत् सर्वदा शुचिः ॥
रुद्राक्षैः स्फटिकैर्युक्तां मुद्राविद्रुमसंयुतम् ।
मालां गले . . . . . . . . . . . . . ॥

---

(i) लक्षपुष्पव्रतकल्पः.

LAKṢAPUṢPAVRATAKALPAḤ.

Foll. 20*a*—22*a*.

Similar to the work described under No. 8447 of the D.C.S. MSS., Vol. XVI.

Complete.

**Beginning :**

शौनक उवाच—

नष्टपुत्रा च या नारी या नारी कन्यकाप्रसूः ।
अप्रजा सा विगर्भा च दुष्टपुत्रा तथैव च ॥
रोगिपत्या समायुक्ता स्वयं रोगसमन्विता ।
अन्यस्त्रीकलहं भर्त्रा या . हृत्यसमन्विता ॥
एतद्विनाशनार्थाय यद्यस्ति विधिरुच्यताम् ।

व्यासः —

मृतपुत्रवती नारी लक्षपुष्पव्रतं चरेत् ।
आयुष्मतश्च पुत्रांश्च लभते नात्र संशयः ॥

* * * *

लक्षपुष्पव्रतं नाम चतुर्विधफलप्रदम् ।
कर्तव्यं माघमासे तु वैशाखे मधुमासके ॥
श्रावणे कार्तिके चैव मार्गशीर्षे तथैव च ।
शतपत्राणि चाहृत्य मल्लिका जातिमल्लिकाः ॥
केतकीकरवीरांश्च वकुलाशोकचम्पकान् ।
एवमादीनि पुष्पाणि सङ्ख्यातं पूजयेत्सदा ॥

**End:**

एवं कृत्वा ततः साध्वी चचार व्रतमुत्तमम् ।
पुत्रं लेभे महाप्राज्ञं गुणवन्तं शुचिं कविम् ॥
विष्णुभक्तं महासत्यं हरिभक्तिसमन्वितम् ।
इतिहासमिदं पुण्यं ये शृण्वन्ति नरोत्तमाः ॥
ते सर्वे पापनिर्मुक्ता विष्णुलोके महीयते ।

**Colophon:**

इति श्रीविष्णुपुराणे शौनकसूतसंवादे लक्षपुष्पव्रतकल्पः संपूर्णः ॥

---

(j) लक्षतुलसीव्रतकल्पः.

LAKṢATULASĪVRATAKALPAḤ.

Foll. 22*a*—23*a*.

Same work as that described under No. 8440 of the D.C.S. MSS., Vol. XVI; but with a slightly different colophon.

Complete.

**Colophon:**

इति श्रीविष्णुसंहितायां लक्षतुलसीव्रतोद्यापनविधिः संपूर्णः ॥

---

(k) लक्षतुलसीव्रतोद्यापनम्.

LAKṢATULASĪVRATŌDYĀPANAM.

Foll. 23*a*—25*a*.

Deals with the ceremony that should be performed on the completion of the above Vrata. Taken from Viṣṇusaṁhitā.

Complete.

**Beginning :**

कल्पः—

शृणु राजन् प्रवक्ष्यामि लक्षश्रीतुलसीव्रतम् ।
सर्वसम्पत्करं नर्णां सर्वशत्रुविनाशकम् ॥
पुत्रसम्पत्प्रदं चैव सर्वरोगविनाशनम् ।
हरिभक्तिप्रदं चैव सर्वतीर्थप्रदं शुभम् ॥
विधानतः प्रकर्तव्यं लक्षश्रीतुलसीव्रतम् ।
मृकण्डुर्नाम मेधावी वेदवेदाङ्गपारगः ॥

* * * *

हरयेऽतिप्रयत्नेन लक्षश्रीतुलसीदलान् ।
सहस्रनामभिस्तर्हि सुपुत्रान् प्राप्स्यते ध्रुवम् ॥

**End :**

पितरौ तौ महात्मानं पुत्रं लब्धायुषं तदा ।
मोदमानं तदा राजन् यातां हरिपदं ततः ॥
तस्मात्सर्वप्रयत्नेन कुरुष्व व्रतमुत्तमम् ।
अङ्गहीनं न कर्तव्यं व्रतपूर्णं फलेच्छुभिः ।
अङ्गहीने व्रते जाते न ददाति यथाफलम् ॥

**Colophon :**

इति श्रीविष्णुसंहितायां लक्षतुलसीव्रतोद्यापनकल्पः संपूर्णः ॥

---

(*l*) अनन्तव्रतोद्यापनकल्पः.

ANANTAVRATŌDYĀPANAKALPAḤ.

Foll. 25*a* –30*a*.

Deals with the ceremony to be performed at the end of Anantavrata. Taken from Bhaviṣyōttarapurāṇa.

Complete.

**Beginning :**

अनन्तव्रतोद्यापनकल्पः—

युधिष्ठिरः—

त्वत्प्रसादाद्धृषीकेश श्रुतं मे व्रतमुत्तमम् ।
कालश्चापि गतस्सर्वः कैवल्यं समुपस्थितम् ॥

इदानीं कृपया ब्रूहि व्रतोद्यापनमुत्तमम् ।
उद्यापनविधानेन व्रतस्य फलमश्नुते ॥
कर्तव्यं तु कथं भक्तिरखण्डफलदायिका ।

श्रीकृष्णः—

शृणु पार्थिव वक्ष्यामि व्रतोद्यापनमुत्तमम् ।
कृतेन यद्राजन् विष्णोस्तत्तत्पदमवाप्नुयात् ॥
यथा तथा वा तत्कुर्यात् वित्तशाठ्यं न कारयेत् ।
वर्षे वर्षे चतुर्दश्यां नवसूत्रं च कारयेत् ॥
वर्षे चतुर्दशे पूर्णे कुर्याद्यजनमुत्तमम् ।
आदौ मध्ये तथान्ते च कुर्यादुद्यापनं बुधैः ॥

**End:**

नृपैरन्यैश्च चरितं राज्यं भुक्त्वा दिवं गताः ।
सनन्दनादि(मुनि)भिर्ब्रह्मशङ्करवैष्णवैः ॥
तस्माद्व्रती महाविष्णोरनन्तव्रतमाचरेत् ।
व्रतस्य फलमाप्नोति विष्णुलोके महीयते ।
यः करोति व्रतं श्रेष्ठं व्रतोद्यापनमुत्तमम् ॥

**Colophon:**

इति श्रीभविष्योत्तरपुराणे अनन्तव्रतोद्यापनकल्पः संपूर्णः ॥

Foll. 30*a* and 30*b* contain some Phalaśrutiślōkas.

---

(*m*) रामकोटिव्रतोद्यापनविधिः.

RĀMAKŌṬIVRATODYĀPANAVIDHIḤ.

Foll. 31*a*—36*b*.

Deals with the ceremony to be performed at the end of Rāmakōṭirata. Taken from Agastyasaṁhitā.

Complete.

**Beginning:**

श्रीसूतः—

कैलासशिखरे रम्ये नानादेवगणावृते ।
चतुर्मण्डलसंयुक्ते शृङ्गारे मण्टपे स्थितम् ॥

समाधौ संस्थितं शान्तं देवेशं वृषभध्वजम् ।
पप्रच्छ गौरी सन्तुष्टा लोकानुग्रहकाङ्क्षिणी ॥
मानवानां तु सर्वेषां जन्तूनामपि शङ्कर ।
अज्ञाननाशकं श्रेष्ठं भोगमोक्षप्रदायकम् ॥
व्रतं किं सूचितं पूर्वं तन्मे ब्रूहि सदाशिव ।

शङ्करः—

अस्ति गुह्यतमं देवि विष्णुलोकप्रदायकम् ।
सर्वकार्यार्थपुत्रादिराज्यादिविभवप्रदम् ॥

* * * *

रामकोटिव्रतमिदं राघवप्रीतिकारणम् ।
तद्विधानं तु लघुना प्रवक्ष्याम्यहमादरात् ॥
व्रतस्यास्य तु माहात्म्यं विष्णुर्जानाति वा नवा ।
वक्तव्यं किं पुनर्देवि ब्रह्माद्या अल्पमेधसः ॥
न मे चाशेषतो वक्तुं शक्तिरस्ति महेश्वरि ।
तथापि भक्त्या यत्किञ्चित्तद्विधानमुदीर्यते ॥
मुख्यकाले चैत्रमासे नवम्यां सितपक्षके ।
अथवा कार्तिके माघे श्रावणे शुक्लपक्षके ॥
वैशाखे वापि कुर्वीत तन्नक्षत्रेण संयुते ।
मलमूढादिरहिते ग्रहसङ्क्रमवर्जिते ॥
व्रतारम्भं प्रकुर्वीत नवमीमारभ्य केचिन् ।
ब्राह्मे मुहूर्ते उत्थाय पादशौचं विधाय च ॥

**End:**

आशीर्वादं गृहीत्वाथ स्वयं भुञ्जीत वाग्यतः ।
शान्तिश्च गिरिजे प्रोक्ता मया लघुविधानतः ॥
एवं यः कुरुते भक्त्या विष्णुसायुज्यमाप्नुयात् ।
एवं भक्त्या प्रकुर्वाणः सत्यं सत्यं मयोदितम् ॥
रामार्चनचन्द्रिकोक्तमार्गेणैवं समाचरेत् ॥

**Colophon:**

इत्यगस्त्यसंहितायां रामकोटिजपलेखकोद्यापनं नाम पञ्चपञ्चाशाध्यायस्समाप्तः ॥

(*n*) रामपूजाविधिः.

RĀMAPŪJĀVIDHIḤ.

Foll. 36*b*—54*a*.

Deals with the manner of worshipping Rāma.

Complete as found in the Agastyasaṁhitā.

**Beginning:**

अथ रामकोटयुद्यापनाङ्गकलशस्थापनविधिरुच्यते —

सायंकाले स्नात्वा गृहं गत्वा शुद्धवस्त्रं धृत्वा तिलकधारणानन्तरमाचार्यं वृत्वा, ऋत्विग्वरणं कृत्वा शुद्धदेशे गोमयेनोपलिप्य रङ्गवल्ल्यादिकं कृत्वा कलशस्थापनं कुर्यात् । आदौ स्वस्तिवाचनं कृत्वा पञ्च गव्यद्रव्याणि पञ्च पल्लवानि पञ्च त्वचो पञ्च मृत्तिकाः ।

* * * *

ज्ञानाज्ञानकृतदोषपरिहारार्थं विष्णुसायुज्यप्राप्त्यर्थं भविष्योत्तरपुराणोक्तप्रकारेण रामकोटयुद्यापनाङ्गकलशस्थापनं करिष्ये ।

**End:**

चैत्रमासे सिते पक्षे नवम्यां च पुनर्वसौ ।
बुधे कर्कटमध्याह्ने जातो रामस्स्वयं हरिः ।
गृहाणार्घ्यं मया दत्तं सीतया सह राघव । इदमर्घ्यम् ।
अस्यां रामनवम्यां च रामाराधनतत्परः ॥
उपोष्य यामेषु सदा पूजयामि यथाविधि ।
राजोपचारान् कृत्वा च यस्य स्मृत्येति चार्पणम् ।

**Colophon:**

इत्यगस्त्यसंहितायां रामपूजाविधिस्समाप्तः ॥

---

(*o*) श्रीरामनवमीव्रतकल्पः.

ŚRĪRĀMANAVAMĪVRATAKALPAḤ.

Foll. 54*b*—57*b*.

Same work as that described under No. 8438 of the D.C.S. MSS., Vol. XVI.

Complete.

(*p*) रामनवमीव्रतोद्यापनविधिः.

RĀMANAVAMĪVRATŌDYĀPANAVIDHIḤ.

Foll. 57*b*—58*b*.

Deals with the ceremony to be performed at the end of Rāmanavamīvrata.

Complete.

**Beginning:**

अरे घटीयुता नाड्यः पञ्चपञ्चाशदुत्तराः ।
पञ्चविंशद्विघटिका द्वादशीं समुपोषयेत् ॥

व्यासः—

पञ्चपञ्चाशद्घटिका नवनाडी यदा भवेत् ।
उपोष्य द्वादशीं शुद्धां त्रयोदश्यां तु पारणम् ॥
चौपन्नं च त्रयः पन्नं द्विपन्नं च यथाक्रमम् ।
एकत्रीणि घटिकास्संयोज्यार्यभटः क्रमात् ॥

**End:**

अग्निप्रतिष्ठापनं कृत्वा परमान्नेन यथासङ्ख्यया होमं कृत्वा यजमानं कलशोदकेनाभिषिञ्चेत् ।

इमां स्वर्णमयीं रामप्रतिमां च प्रयत्नतः ।
श्रीरामप्रीतये दास्ये रामभक्ताय धीमते ।

इति दत्वा यथाशक्ति दक्षिणां दद्यात् ।

**Colophon:**

इत्युद्यापनविधिस्संपूर्णः ।

---

(*q*) कृष्णजन्माष्टमीव्रतकल्पः.

KṚṢṆAJANMĀṢṬAMĪVRATAKALPAḤ.

Foll. 68*b*—77*a*.

Deals with the Janmāṣṭamīvrata or the birth-day celebration of Śrī Kṛṣṇa as described in the Brahmāṇḍapurāṇa.

Complete.

**Beginning:**

अथ कृष्णजयन्तीव्रतकल्पविधिरुच्यते—

कदाचिन्मुनयस्सर्वे प्रसन्नं मुक्तिदायकम् ।
सर्वकामप्रदं नृणां सर्ववर्णाधिकारिणम् ॥

ऊचुस्सूतं मुनिश्रेष्ठमिति त्वं ब्रूहि वैष्णवम् ।
वसुमत्यां जनैः श्लाघ्यं सुरलोकमिव स्थितम् ॥

* * * *

जयन्तीव्रतमाहात्म्यं पुरा किञ्चिन्मया श्रुतम् ।
सविशेषं विष्णुपरं श्रोतुमिच्छति मे मनः ॥

मुने विष्णुकथाभिज्ञ सर्वं विस्तारतो वद ॥

* * * *

नारदः—

श्रीजयन्त्याश्च माहात्म्यं कथयस्व पितामह ।
यच्छ्रुत्वाहं गमिष्यामि तद्विष्णोः परमं पदम् ॥

पितामहः —

शृणु वत्स प्रवक्ष्यामि जयन्त्या यत्फलं श्रुतम् ।
चयं पुण्यस्य कुरुते क्षयं दुष्टस्य कर्मणः ॥

स्मरणात् कीर्तनात् पापं सप्तजन्मार्जितं च यत् ।
जयन्ती दहते सर्वं किं पुनश्चोपवासतः ॥

कृष्णजन्माष्टमी लोके प्रसिद्धा पापनाशनी ।
क्रतुकोटिफलं तेषां तीर्थानामयुतं फलम् ॥

**End:**

एवं यः कुरुते राजन् सर्वपापैः प्रमुच्यते ।
तस्माद्वैकुण्ठमाप्नोति नात्र कार्या विचारणा ॥

इदं सत्यमिदं सत्यं मयोक्तं च महामुने ।
नारदस्तु पुरा कृत्वा देवर्षित्वमवाप्नुयात् ॥

त्वं कुरुष्व महाराजन्नात्र कार्या विचारणा ।
पुत्रपौत्रादिभिर्युक्तो सम्पदं चातुलां भुवि ॥
भुक्त्वा भोगान् यथेष्टं त्वमन्ते स्वर्गमवाप्स्यसि ॥

**Colophon:**

इति ब्रह्माण्डपुराणे ब्रह्मनारदसंवादे कृष्णजन्माष्टमीव्रतकल्पस्संपूर्णः ॥

---

(r) कृष्णजयन्तीव्रतकल्पः.
KṚṢṆAJAYANTĪVRATAKALPAḤ.

Foll. 77*a*—91*a*.

Same work as that described under No. 8275 of the D.C.S. MSS., Vol. XVI; but with slight difference in the beginning and end.

Complete.

**Beginning:**

आचम्य प्राणानायम्य सङ्कल्प्य, ततः घण्टानादं कलशाराधनं गणपतिपूजां कलशस्थापनप्रतिमास्थापनप्राणप्रतिष्ठापीठपूजाद्वारपालकपूजादिकं कृत्वा, देवताभिमुखं तिष्ठन् कृष्णं ध्यायेत् । कुसुमाक्षतान् गृहीत्वा व्रतप्रारम्भः—

**End:**

पाण्डवानां हितार्थाय धर्मसंस्थापनाय च ।
कौरवाणां विनाशाय दैत्यानां निधनाय च ॥
गृहाणार्घ्यं मया दत्तं देवक्या सह केशव ।
देवकीगर्भसंभूत भक्तानामभयप्रद ॥
गृहाणार्घ्यं मया दत्तं यशोदानन्दकारक ।

**Colophon:**

इति . . . ।

---

(s) चित्रगुप्तव्रतोद्यापनकल्पः.
CITRAGUPTAVRATODYĀPANAKALPAḤ.

Foll. 91*a*—103*a*.

Similar to the work described under No. 8308 of the D.C.S. MSS., Vol. XVI. Taken from Brahmāṇḍapurāṇa.

Complete.

**Beginning:**

पूर्वो + थौ ममेह जन्मनि जन्मान्त(रीय)पापक्षयार्थमिष्टकाम्यार्थसिद्ध्यर्थं चित्रगुप्तदेवतामुद्दिश्य चित्रगुप्त + र्थं संभवाद्भिर्द्रव्यैस्संभवद्भिरुपचारैश्च संभवता नियमेन ध्यानावाहनादिषोडशोपचारपूजां च करिष्ये । तदङ्गं कलशपूजा गणपतिपूजा प्राणप्रतिष्ठा ।

चित्रगुप्तं महाप्राज्ञं लेखनीपत्रसंयुतम् ।
रक्ताम्बरधरं देवं मध्यस्थं सर्वदेहिनाम् ॥
ध्यायामि सर्वदा भक्त्या पापपुण्यविमर्शकम् ।
यमप्रधानमुख्यं च यमदूतनिषेवितम् ॥

एवं मनसा ध्यात्वा,

चित्रगुप्त महाप्राज्ञ यमप्राणधनेश्वर ।
आगच्छ त्वं मया पूजां दत्तां स्वीकुरु सर्वदा ॥ ध्यानम् ।

**End:**

ताम्बूलं दक्षिणां दत्वा आशीर्वचनमादरात् ।
गृहीत्वा बन्धुभिस्साकं स्वयं भुञ्जीत यत्नतः ॥
एवं करोति विप्रेन्द्रस्स स्वर्गं गच्छति ध्रुवम् ।
य इदं शृणुयान्नित्यं श्रावयेद्वा समाहितः ॥
सिद्ध्यन्ति सर्वकार्याणि नात्र कार्या विचारणा ।

**Colophon:**

इति श्रीब्रह्माण्डपुराणे उमामहेश्वरसंवादे ब्रह्मणा नारदाय कथितं धर्माधर्मपरिपालकचित्रगुप्तव्रतं संपूर्णम् ॥

---

(*t*) लक्षप्रदक्षिणव्रतकल्पः.

LAKṢAPRADAKṢIṆAVRATAKALPAḤ.

Foll. 103*b*—104*a*.

Same work as that described under No. 8449 of the D.C.S. MSS., Vol. XVI; but with a different colophon.

Complete.

**Colophon:**

इति श्रीविष्णुपुराणे लक्षप्रदक्षिणव्रतकल्पस्संपूर्णः ॥

(*u*) लक्षनमस्कारव्रतकल्पः

LAKṢANAMASKĀRAVRATAKALPAḤ.

Foll. 104*a*—106*a*. Fol 106*b* is left blank.

Similar to the work described under No. 8445 of the D.C S. MSS., Vol. XVI. Taken fzom Skāndapurāṇa.

Complete.

**Beginning:**

देवदेव जगन्नाथ वसुदेवकुलोद्भव ।
व्रतं ब्रूहि महाभाग सर्वपापविनाशनम् ॥

श्रीकृष्णः—

चातुर्मास्ये तु संप्राप्ते केशवे शयनं गते ।
आषाढस्य सिते पक्ष एकादश्यां समाहितः ॥
सङ्कल्पं नियमात्कुर्यात्पुरतश्चक्रपाणिनः ।
प्रारम्भे च व्रतमिदं सद्योमुक्तिविधायकम् ॥
यावत्प्राबोधिकी दिव्या कार्तिके विष्णुवल्लभा ।
तावल्लक्षनमस्कारव्रतं पापदवानलम् ॥

**End:**

किमत्र बहुनोक्तेन शृणुष्वात्र व्रतं शुभम् ।
जन्मत्रयवरं नृणां हरिभक्तिप्रदायकम् ॥
अपरोक्षे भवेत्तस्य नात्र कार्या विचारणा ।
नावैष्णवं भवेज्जन्म तस्य पुण्यमनन्तकम् ॥

**Colophon:**

इति श्रीस्कान्दपुराणे ब्रह्मनारदसंवादे लक्षनमस्कारकथा समाप्ता ॥

---

R. No. **5441.**

**Palm-leaf.** 17 × $1\frac{1}{2}$ inches. Foll. 100. **Lines, 6 in a page. Telugu. Good.**

Purchased in 1928–29 from M.R.Ry. N. K. Vakulābharaṇam, Madras.

(*a*) विधवास्वीकारविषयवचनानि.

VIDHAVĀSVĪKĀRAVIṢAYAVACANĀNI.

Foll. 1*a*—10*a*. Fol. 10*b* is left blank.

Deals with the adoption of a son by a widow.

Incomplete.

**Beginning:**

विधवाविधुराभ्यां च तथैव ब्रह्मचारिभिः ।
न स्वीकारो न दातव्यो न च देवरजः कलौ ॥

पत्यावसन्निधाने आह—

पत्यावसन्निधाने तु मृते वन्ध्या तथाथवा ।
गृह्णीयाद्यदि वै पुत्रं स कुण्डो गोलकस्स्मृतः ॥

अमृते जारजः कुण्डो मृते भर्तरि गोलक इति मनुवचनेन यत्र यत्र जारत्वं तत्र तत्र गोलकत्वं कुण्डत्वं चेति व्याप्तिस्सद्भावादिदं वचनं भर्तृ· पित्राद्याज्ञाभावविषयम् । पितृशब्देन भर्तुः पिता श्वशुरः । भर्तुराज्ञया च, अभावे श्वश्र्वा चेत्तदाज्ञया वा पुत्रस्वीकरणं विधवया कर्तव्यम् ।

नारदीये—

पुत्रसंग्रहणं कार्यं तथा विधवयापि च ।
भर्त्रादेराज्ञया यद्वत्सत्यवत्याज्ञयाम्बिका ॥

अम्बिकाया विधवाया अपि वेदव्याससङ्गमो यद्वन्न दोषाय भवति, तद्वद्विधवाया भर्त्राद्याज्ञया कलियुगे दत्तत्वेनान्यपुत्रस्वीकरणं न दोषाय भवति । अन्यथा नारदवचनविरोधात् ।

**End:**

नालच्छेदनतः पूर्वं दद्यान्माता पिता तथा ।
उभयोः पिण्डदानं स्यात् क्षौरकर्म यथाविधि ॥
आशौचं प्रेतसंस्कारं मातापित्रोर्गृहीतयोः ।
विधिवद्दत्तकः कुर्यान्न कुर्यात्तत्सपिण्डनम् ॥
अन्यस्मिन्नपि दत्तस्य गोत्रे चैव सुतस्य च ।
जनकस्य जनन्याश्च शावाशौचं न चापरम् ॥

---

(*b*) दत्तमीमांसा

DATTAMĪMĀṀSĀ.

Foll. 11*a*—44*b*.

Same work as that described under No. 3164 of the D.C.S. MSS., Vol. VI. By Nandapaṇḍita.

Complete.

(*c*) दत्तपुत्रविषयवचनानि.

DATTAPUTRAVIṢAYAVACANĀNI.

Foll. 45*a*—55*a*.

Taken from Hēmādri. Similar to the above.

Incomplete.

**Beginning :**

अत्र दत्तपुत्रविषये हेमाद्रौ वचनानि—

औरसेन समो दत्तो यदि वोदकपूर्वकम् ।
अपुत्राय यदा दद्यात् दत्तं तं नान्यथा भवेत् ॥
नित्यस्य दत्तपुत्रस्य विधिरेष उदाहृतः ।
कामरूपो दत्तपुत्रो यथा स्याद्विधिहीनतः ॥
ततस्तं पूर्वगोत्रेण सह युञ्जीत पूर्ववत् ।
इष्टकाले पूर्वगोत्रं पूर्वकाले तु तत्कुलम् ॥

पालकगोत्रमपि सार्वकालिकं ग्राहकगोत्रमपि चार्षमार्षं प्राप्य तं तु रजे पालये गृहीत्यकं ? चूडाकर्मादिसंस्कारः ।

अथ दातुर्गोत्रनिर्णयः—

एक एव तु दत्तस्स्याद्दातुश्च सगोत्रिणाम् ।
तत्पुत्रपौत्रकान् सर्वान् पूर्वगोत्रेण योजयेत् ॥

**End :**

सप्तपदारोपणे पुत्रान् विन्दावहै बहूनिति श्रुतेर्विद्यमानत्वात् जनयेद्बहुपुत्राणीति अष्टपुत्रा भव त्वञ्चेति श्रुतिवचनस्य विद्यमानत्वात् बहुपुत्रवान् पुत्रदाने योग्यः । तेन दाने प्रतिग्रहे न दोषः । अनेकपुत्रसद्भावे ज्येष्ठकनिष्ठपुत्रौ न प्रदेयाताम् ॥

---

(*d*) पुत्रस्वीकारनिर्णयः.

PUTRASVĪKĀRANIRṆAYAḤ

Foll. 55*a*—71*a*.

Same work as that described under Nos. 3176 and 3182 of the D.C.S. MSS., Vol. VI. By Rāmapaṇḍita.

Complete.

(*e*) संस्कारकौस्तुभः.

SAMSKĀRAKAUSTUBHAḤ.

Foll. 71*a*—88*b*.

Same work as that described under No. 3226 of the D.C.S. MSS., Vol. VI. By Anantadēva.

Complete.

(*f*) मूकाद्युपनयनविधिः.

MŪKĀDYUPANAYANAVIDHIḤ.

Fol. 89.

Deals with the performance of Upanayana ceremony for the dumb etc.

Complete.

**Beginning:**

अथ मूकस्योपनयने विशेषः । तत्र प्रयोगपारिजाते—

ब्राह्मण्यं ब्रह्मणा ख्यातो ब्राह्मण्यस्य इति स्मृतिः ।
तस्माच्च षण्डबधिरकुब्जवामनपङ्गुषु ॥
जडी गद्गदरोगार्तः कुष्ठाङ्गविकलादिषु ।
मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ॥
ध्वस्तपुंस्त्वेषु चैतेषु संस्कारास्स्युर्यथोदिताः ।
मत्तोन्मत्तौ न संस्कार्याविति केचित्प्रचक्षते ॥

**End:**

आपस्तम्बस्तु उपनयनं विद्यार्थस्य श्रुतितस्संस्कार इति । विद्यार्थस्येति वचनान्मूकादेरुपनयनं नास्तीत्युज्वलाभाष्ये । तथाच शङ्खलिखितौ—नोन्मत्तमूकौ संस्कार्याविति । अत्र विकल्पः ॥

**Colophon:**

इति मूकाद्युपनयनं समाप्तम् ।

(*g*) रजस्वलास्नानविधिः.

RAJASVALĀSNĀNAVIDHIḤ.

Foll. 89*b*—90*b*.

Similar to the work that described under No. 2959 of the D.C.S. MSS., Vol. V.

Incomplete.

**Beginning:**

अथ ज्वरे रजस्वलास्नानविधिः—

रजस्वलावती नारी स्नानाभावे स्वकालतः ।
प्राजापत्यं चरेत्साध्यं पञ्चगव्येन शुध्यति ॥

मनुः—

एकादशाहा नीता चेत्सूतिका च रजस्वला ।
चतुर्थाहे त्वतिक्रान्ते प्राजापत्यं समाचरेत् ॥
प्राशयेत्पञ्चगव्यं तु नारी पापात्प्रमुच्यते ।
प्राजापत्यं चरेत्साध्वी मृदा स्नानैकविंशतिम् ॥
दश द्वादश वा कार्यं मृत्स्नानं पापशोधनम् ।
सुवासिनीनां नारीणां हरिद्रास्नानमिष्यते ॥

**End:**

कलौ पाराशरोक्तानां व्रतानामेव मुख्यता ।
तैरल्पैरपि तत्पापं निश्शेषं विनिवर्तते ॥
यथाल्पनाशो महता महन्नाशस्तथाल्पतः ।
किं नस्याद्विस्फुलिङ्गेन तूलाराशिर्हि दह्यते ॥

---

(*h*) द्वादशवर्षादूर्ध्वविलोकननिषेधविधिः.
DVĀDAŚAVARṢĀDŪRDHVAVILŌKANANIṢĒDHAVIDHIḤ.

Foll. 91*a*—93*b*.

It is prohibited to see one's relations such as wife, mother, father, brother, sister and daughter, after an interval of 12 years. This Vidhi is enjoyened with a view to enabling one to see them after that period by performing certain ceremonies.

Complete.

**Beginning.**

अथ द्वादशवर्षादूर्ध्वं परस्परविलोकनविधिः—

युधिष्ठिरः—

भार्यामातृपितृभ्रातृभगिनीपुत्रिकासुताः ।
स्वदेशे वान्यदेशे वा एकैकं ददृशुर्न च ॥
द्वादशाब्दे गते कृष्ण किं कर्तव्यं तदा जनैः ।
शृणु राजन्नहं वक्ष्ये मुनिभिः कथितं पुरा ॥

पुण्याहवाचनं कृत्वा तिथिश्रवणपूर्वकम् ।
सुदिने च सुलग्ने च चन्द्रताराबलान्विते ॥

**End:**

बन्धुभिस्सह भुञ्जीयादनुज्ञात्वा यथासुखम् ।
शान्तिं कुर्युर्जना ये च तेषां दोषो न विद्यते ॥
लोकान् धातुमयं शान्तिर्मुनिभिः कथिता पुरा ।
एतत्ते कथितं पार्थ लोकानां हितकारणात् ॥

**Colophon:**

इति ब्रह्माण्डपुराणे द्वादशवर्षादूर्ध्वमवलोकनविधिस्समाप्तः ।
अतीते द्वादशे वर्षे तन्मुखावलोकने विधिनिषेधौ दर्शयति—
अतीते द्वादशे वर्षे तन्मुखं नावलोकयेत् ।
अनतीते वत्सरे स्यात् सोदरस्यावलोकनम् ॥ इति ।
नारदोऽपि—
सुतैस्सहोदरैः पित्रोरब्धद्वादशकोत्तरे ।
निरीक्षणं न कर्तव्यं दृष्टे हानिस्तयोर्भवेत् ॥

**End:**

शृङ्गमध्ये पानपात्रं धृत्वा शुभ्रं नवस्थितम् ।
हरस्य पश्चिमे भागे ज्येष्ठश्शम्भुं हृदि स्मरन् ॥
परस्परं चावलोकं कुर्याद्ब्राह्मणसन्निधौ ।
एवं यः कुरुते राजंस्तस्य दोषो न विद्यते ॥

---

(*i*) रजस्वलाशुद्धिक्रमः.
RAJASVALĀŚUDDHIKRAMAḤ.

Foll. 93*b*—96*b*.

Determines the purity or otherwise of a woman under menses after a certain interval.

Complete.

**Beginning:**

अथ रजस्वलाशुद्धिः—
अष्टादशाहान्नारीणां विण्मूत्राशौचमिष्यते ।
अष्टादशाहे स्नानं स्यात् त्रिरात्रात्परतः शुचिः ॥

एषा दिनसङ्ख्या स्नानदिनपूर्विका । स्नानेतिवचनात् ।

अत्रिः—

रजस्वला यदि स्नाता पुनरेव रजस्वला ।
अष्टादशदिनादर्वाक् (अ)शुचित्वं न विद्यते ॥
एकोनविंशतेरर्वागेकाहं स्यात्ततो द्व्यहम् ।
विंशत्युत्तरकाले तु त्रिरात्रमशुचिर्भवेत् ॥

**End:**

मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ।
त्वया हतेन पापेन गच्छामि परमां गतिम् ॥

इति मृत्तिकां गृहीत्वाङ्गानि लेपयित्वा पवमानसूक्तैस्समुद्रज्येष्ठा इत्यादिभिः शान्तिसूक्तैर्मार्जयित्वा ब्रह्मादीन् तर्पयित्वा ततस्सा शुचिर्भवतीति विज्ञायते ।

---

(*j*) दत्तविषयकवचनानि.

DATTAVIṢAYAKAVACANĀNI.

Foll. 97*a*—100*a*. Fol. 100*b* is left blank.
Stanzas dealing with the adoption of a son.
Incomplete.

**Beginning:**

महाभारते—

अज्ञात्वा सकलान् दोषान् यो गृह्णाति ददाति च ।
दत्तं पुनश्च संस्कुर्यादिति वेदविदो विदुः ॥ इति ।

मदनरत्ने बृहन्मनुः—

नवभिस्सप्तभिः षड्भिश्चतुर्भिः पञ्चभिस्त्रिभिः ।
द्वाभ्यामेकेन दोषेण सहितं वा परित्यजेत् ॥ इति ।

हेमाद्रौ प्रायश्चित्तकाण्डे गोभिलः—

मोहादविधिनाज्ञानात्कृतं कर्म निरर्थकम् ।
जलताडनवज्ज्ञात्वा कृतं तत्तु परित्यजेत् ॥ इति ।

**End:**

स्वायम्भुवमनुः—

पुत्रं दत्त्वा पिता माता देवाग्निगुरुसन्निधौ ।
राज्ञा च विहितौ दण्डौ पुनस्स्वीकरणं यदि ॥
मृते भर्तरि या नारी चिराद्गृह्णाति पुत्रकम् ।
स पुत्रः पतितो ज्ञेयस्सर्वकर्मबहिष्कृतः ॥ इति ।

---

R. No. **5442.**

**Palm-leaf.** 17 × 1 inches. Foll. 97. Lines, 6 in a page. **Telugu.** Good.

Purchased in 1928–29 from M.R.Ry. N. Vakulābharaṇam, **Madras.**

(*a*) दत्तपुत्रलक्षणम्.
DATTAPUTRALAKṢAṆAM.

Foll. 1*a*—3*a*.
On the characteristics of the boy that should be adopted.
Incomplete.

**Beginning:**

दत्तपुत्रलक्षणम् । शाकलकारिकाः स्मृत्यर्थसारे—

औरसः पुत्रिकापुत्रः क्षेत्रजो गूढजस्तथा ।
कानीनश्च सहोढश्च दत्तक्रीतश्च कृत्रिमः ॥
दत्तात्मा च सहोढश्चापविद्धः सुतस्तथा ।
एते द्वादशपुत्राश्च संस्कार्याश्च द्विजातिभिः ॥

याज्ञवल्क्यो विशेषमाह—

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतस्स्मृतः ।
कानीनः कन्यकाजातो मातामहसुतो मतः ॥
अक्षतायां क्षतायां वा जातः पौनर्भवस्तथा ।
दद्यान्माता पिता वापि स पुत्रो दत्तको भवेत् ॥

**End :**

तथा एकपुत्रो न देयः, न चैकं पुत्रं दद्यान्न प्रतिगृह्णीयादिति वासष्ठ-स्मरणात् । ज्येष्ठेन जातमात्रेण पुत्री भवति मानव इति तस्यैव पुत्र-करणे मुख्यत्वात् ।

दत्तपुत्रप्रतिग्रहप्रकारः प्रयोगपारिजाते ।

---

(*b*) पुत्रस्वीकारविधिः.

PUTRASVĪKĀRAVIDHIḤ.

Foll. 3*a*—4*a*.

Same work as that described under No. 3184 of the D.C.S. MSS., Vol. VI. The end which is different is given below.

By Śaunaka.

**End :**

बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नतः ।
दक्षिणां गुरवे दद्याद्यथाशक्ति द्विजोत्तमः ॥
नृपो राष्ट्रार्थमेवापि वैश्यश्चाथ शतत्रयम् ।
शूद्रस्सर्वस्वमेवापि न शक्तश्चेद्यथारुचि ॥

**Colophon :**

इति शौनकोक्तपुत्रसंग्रहविधिस्समाप्तः ॥

---

(*c*) दत्तविषयशाकलकारिकाः.

DATTAVIṢAYAŚĀKALAKĀRIKĀḤ.

Foll. 4*a*—9*a*.

Deals with the adoption of a son as laid down by Śākala.

Complete.

**Beginning :**

मुख्यगौणपुत्रविषयः—

पुत्रं प्रतिग्रहीतव्यं बन्धूनाहूय राजनि ।

राज्ञे निवेद्य निवेशस्य मध्ये अग्निं प्रतिष्ठाप्य व्याहृतीर्हुत्वा ज्ञाति-दायादबन्धुमित्रसुहृत्प्रमुखसभासन्निकृष्टः प्रतिगृह्णीयादिति वसिष्ठस्मरणात् । अदूरबान्धवा इति अन्यदेशभाषावेषविप्रकृष्टस्य प्रतिषेधः । एवं क्रीत-दत्तकृत्रिमेष्वपि योज्यम्, सामान्यन्यायात् ।

**End :**

दहनादिकं सर्वं प्रेतकर्म कृतं चेत्स शूद्रतुल्य एव । तदस्थिसञ्चयनदहनमन्त्रवद्दहनादिकं कृतमित्यर्थं तेषां प्रायश्चित्तं पृथगुक्तानुक्तमपि विचारणीयम् ।

**Colophon :**

इति दत्तविषयशाकलकारिकास्संपूर्णाः ॥

---

(*d*) द्वादशविधपुत्रविषयः.

DVĀDAŚAVIDHAPUTRAVIṢAYAḤ.

Foll. 9*a*—13*a*.

Describes the twelve kinds of sons as stated by Manu.

Incomplete.

**Beginning :**

अथ द्वादशविधपुत्रविषयः—

पुत्रा द्वादशविधा इति मनुना दर्शिताः—

औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवश्च षट् ॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयं दत्तश्च शौद्रश्च षडदायादबान्धवाः ॥
स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादितश्च यः ।
तमौरसं विजानीयात्पुत्रं प्रथमकल्पितम् ॥

**End :**

पञ्चबन्धुष्वनुज्ञाप्य सर्वभूतेषु पूजितः ।
शुभे मुहूर्ते सुदिने शुभयोगे समाचरेत् ॥
स्वगोत्रे चान्यगोत्रे वा पुत्रेष्टिं प्रथमं चरेत् ।
विशेषाद्भ्रातृवर्गाणां होमादिनियमो न हि ॥

---

(*e*) पुत्रस्वीकारविधिः.

PUTRASVĪKĀRAVIDHIḤ.

Foll. 13*a*—14*a*.

On the details of procedure laid down by Manu in connection with the adoption of a son.

Complete.

**Beginning:**

अथातस्संप्रवक्ष्यामि पुत्रसंग्रहणे विधिम् ।
आचार्यं वरयेत्पूर्वं वैष्णवं वेदपारगम् ॥

ज्ञातिभिर्बन्धुभिर्मित्रैः ब्राह्मणैर्वेदपारगैः ।
पतिपुत्रयुतस्त्रीभिः कीर्तयद्भिश्च मङ्गलम् ॥

* * * *

सज्ञातिबन्धुभिर्युक्तः पुत्रं दास्याम्यहं तव ।
इत्युक्त्वोदकपूर्वं तं शिशुं दत्वा वदेच्छुभम् ॥

गोत्रप्रवरशाखाभिर्नामभिश्च त्रिपूरुषम् ।
उभयोस्सम्यगुच्चार्य स्वीकारो ह्यन्यगोत्रके ॥

**End:**

शूद्रस्सर्वं प्रदद्यात्तदाचार्यायैव दक्षिणाम् ।
ब्राह्मणान् भोजयेद्भक्त्या दक्षिणाद्यैस्स्वशक्तितः ॥

भोजनं कारयेत्तत्र वित्तशाठ्यविवर्जितः ।
तेराशिषः प्रगृह्याथ शिशोर्मङ्गलमाचरेत् ॥

**Colophon:**

इति मनूनोदीरितपुत्रस्वीकरणविधिस्समाप्तः ॥

Fol. 14a contains some Ślōkas on adoption

---

(*f*) दत्तरत्नप्रदीपिका.

DATTARATNAPRADĪPIKĀ.

Foll. 14a—14b.

Similar to the work that described under R. No. 5441 ante. By Śrīnivāsa son of Tātayārya of Śrīśaila family.

Wants beginning; otherwise complete.

**Beginning:**

व्यवहारचन्द्रिकायाम्—

सन्निहितसपिण्डसद्भावे विभक्तपत्न्या अपुत्रायाः अंशभाक्त्वं दानाधिकारित्वं चास्ति नेति विचारे उभयं चास्तीति केषांचित्पूर्वपक्षिणां पक्षः। अत्र वचनानि—

कुल्येषु विद्यमानेषु भ्रातृपुत्रसनाभिषु।
असुतस्य प्रमीतस्य पत्नी तद्धनहारिणी॥
अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता।
पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च॥
मृते भर्तरि तद्द्रव्ये तथा पुत्रप्रतिग्रहे।
विक्रये चैव दाने च पत्न्याश्चापि स्वतन्त्रता॥

इत्यादिभिर्वचनैर्दानाधिकारिताया अंशभाक्त्वस्य च सिद्धेरिति तत्र विचारणीयम्।

याज्ञवल्क्यः—

रक्षेत्कन्यां पिता विन्नां पतिः पुत्राश्च वार्द्धके।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं स्त्रियः क्वचित्॥

इत्यादिवचनैस्सामान्यतः स्त्रियस्स्वातन्त्र्यनिषेधे सत्यपि मृते भर्तरीत्यादिवचनैर्दानाधिकारितायास्तदयुक्तस्वातन्त्र्यस्य च विहितत्वेनोत्सर्गापवादन्यायेन सामान्यतस्स्वातन्त्र्याभावप्रतिपादकयाज्ञवल्क्यवचनस्य विहितस्वातन्त्र्यव्यतिरिक्तपरत्वस्यावश्यकत्वेऽपि,

**End:**

तस्माद्दत्तजस्य पूर्वगोत्रप्राप्तिवचनस्य जनकगोत्रविस्मरणमूलकतद्गोत्रजकन्याविवाहप्रयुक्तगोत्रसङ्करजशङ्कया विवाहादौ सावधानेनापि स्मरणशीलेन भवितव्यमिति शिक्षणीयान्यगोत्रजदत्तप्रतिग्रहप्रतिषेधवचनानामिव गतिरूहनीयेति सर्वं समञ्जसम्॥

मुख्यः पुत्रो यस्य न स्यादमुष्य प्राप्तः पुत्रो दत्तिमः शास्त्रदृष्ट्या।
भ्रान्ताक्षेपध्वान्तमस्मिन्निरोद्धुं क्लृप्तोऽस्माभिर्दत्तरत्नप्रदीपः॥

मीमांसामांसलात्मानस्स्मृतिसर्वस्वदर्शिनः।
सन्तः पश्यन्तु तामेतां दत्तरत्नप्रदीपिकाम्॥

यद्युक्तमुक्तमस्माभिर्युक्तिभिर्दायनिर्णये ।
तद्दत्तमात्रे दिङ्मात्रं दर्शितं विदुषां मुदे ॥
श्रीशैलवंशाम्बुधिपूर्णिमेन्दोः श्रीतातयार्यस्य सुतश्शुभाढ्यः ।
श्रीश्रीनिवासो ननु दत्तरत्नप्रदीपमेनं न्यधिताधिलोकम् ॥

---

(*g*) अनेकमातृदायविभागवचनानि.
ANĒKAMĀTṚDĀYAVIBHĀGAVACANĀNI.

Fol. 42*a*.

Stanzas dealing with the partition of property by sons in cases where there are one or more mothers.

Complete.

**Beginning:**

अनेकमातृविभागस्थले मातृत एव भागकल्पनेत्यत्र जगन्नाथतर्कपञ्चानने दायविभागद्वीपे विद्यमानवचनानि—

बृहस्पतिः—

यद्येकजाता बहवो विषमा वापि संख्यया ।
सापत्न्यास्तैर्विभक्तव्यं मातृभागेन धर्मतः ॥ इति ।

एतद्विषय एव गौतमधर्मवचनम् । प्रतिमातृ वा स्ववर्गे भागविशेष इति । मातरं मातरं प्रति एकैको भागो वा देयः । एतद्वचनोपष्टम्भकतथैव तस्मिन्नेव पञ्चाननग्रन्थे—

**End:**

वैमात्रेयाणां पुत्राणां मातृतो भागकल्पना धर्म्येति व्याख्यातत्वाच पत्नीभाग एव ज्यायः । भानुजीमते पत्नीनां बहुत्वसद्भावे तासामेव विभागः ।

---

(*h*) दत्तचन्द्रिका.
DATTACANDRIKĀ.

Foll. 42*b*—59*b*.

Same work as that described under No. 3176 of the D.C.S. MSS., Vol. VI; but with a different end which is given below.

Complete.

**End:**

एवं कुर्वन्न मुह्यतीति वचनस्यार्थः । द्वाभ्यां मातृभ्यां षट् पिण्डा एव देया इत्याह । न तु द्वादश पिण्डाः । किन्तु तेष्वेव षट्सु द्वे उपलक्षयेदित्यापस्तम्बस्मरणात् । इत्यादि सर्वं समञ्जसं भवति । एवमेव प्रकारेण विदुषः सन्तः विदाङ्कुर्वन्तु ॥

**Colophon:**

दत्तचन्द्रिका संपूर्णा ।

---

(i) संस्कारकौस्तुभः.

SAMSKĀRAKAUSTUBHAḤ.

Foll. 60*a*—74*a*.

Same work as that described under No. 3226 of the D.C.S. MSS., Vol. VI. The end which is different is given below.

Complete.

**End:**

व्यस्तसमस्तव्याहृतिभिः क्षीराज्यं हुत्वा स्विष्टकृदादिहोमशेषं समाप्याचार्याय धेनुं दद्यात् । वस्त्रादिभिर्यथाशक्ति दक्षिणां दद्यात् । ब्राह्मणेभ्योऽन्नं दद्यात् ।

**Colophon:**

शौनकोक्तपुत्रप्रतिग्रहविधिस्संपूर्णः ॥

---

(j) दत्तमीमांसा (सत्याषाढीया).

DATTAMĪMĀMSĀ (SATYĀṢĀḌHĪYA).

Foll. 74*a*—84*a*.

Same work as that described under No. 3157 of the D.C.S. MSS., Vol. VI; but with different end and colophon.

Complete.

**End:**

जनको निवृत्तो मृतस्तस्य पुत्रो पितुर्द्रव्यं पिण्डदो भोक्तुमर्हति । पौत्रः परेण गृहीतो दत्तपुत्रकस्सन् ज्ञातिपितामहो मृतः । प्रत्यक्षे क्षात्रिणामधो बीजाद्योनिर्बलीयसी इत्युक्तम् । "उच्चरत्पोषकस्यादौ दत्तः पश्चात्तु

नीविनः ।" इति कार्ष्णाजिनिना जनकसकाशात्प्रतिगृहीतुस्तथा प्राबल्य-मुक्तम् ।

**Colophon :**

इति सत्याषाढसूत्रीयविवरणनित्यानित्यकेवलदत्तप्रकरणमीमांसा संपूर्णा ॥

तताम्बात्रितयं सपत्निजननीमातामहादित्रयं
तत्स्त्रीस्त्रीस्तनयादितातजननी तद्भ्रातरस्त्रीसुताः ।
ताताम्बात्मभगिन्यपत्यधवयुग्जायापतौ सोदरी
शिष्याप्तः सुहृदो महालयविधौ तीर्थे तथा तर्पणे ॥

---

(*k*) दत्तचन्द्रिका.

DATTACANDRIKĀ.

Foll. 84*a*—97*a*. Fol. 97*b* is left blank.

Similar to the work described under No. 3176 of the D.C.S. MSS., Vol. VI.

Complete.

**Beginning :**

वन्दे वन्दारुमन्दारं मन्दतरशुभान्वितम् ।
सुन्दरं कुन्दरदनं नन्दनन्दनमन्वहम् ॥

इह तावत्

पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते ।
अपुत्रस्य गतिर्नास्ति प्रेत्य चेह च सत्तम ॥

इत्यादौ पुत्रवतामैहिकामुष्मिकफलावाप्तिरपुत्राणां तदभावश्च स्मर्यते । अतः ऐहिकामुष्मिकफलेप्सुभिरवश्यं पुत्रवद्भिर्भाव्यम् । ते च पुत्राः द्वादश-विधाः धर्मशास्त्रेष्वाम्नाताः ।

यथोक्तं मनुना—

औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः ॥ इति ।
तेषां स्वरूपं याज्ञवल्क्येन निरूपितम् ।

**End:**

दत्तसन्ततेः पालकगोत्रेणैव श्राद्धकर्तृत्वाधिकारः । असगोत्रदत्तपुत्र- सन्ततिः पालकगोत्रस्यैव । असगोत्रदत्तपुत्रस्यैव पालकश्राद्धकर्तृत्वाधिकारः । एवंप्रकारेण सन्तो विद्वांसः कुर्वन्तु ॥

**Colophon:**

दत्तकचन्द्रिका संपूर्णा ।

---

R. No. **5443.**

Palm leaf. 19 × 1½ inches. Foll. 42. Lines, 10 in a page. Telugu. Slightly injured.

Presented in 1928–29 by M.R.Ry. Rāmanātha Śāstri, Kṛṣṇarāja-puram, Trichinopoly district.

अनर्घराघवम्.

ANARGHARĀGHAVAM.

Same work as that described under No. 12432 of the D.C.S. MSS., Vol. XXI. By Murāri.

Complete.

---

R. No. **5444.**

Palm-leaf. 16½ × 1½ inches. Foll. 30. Lines, 7 in a page. Telugu. Injured.

Purchased in 1928–29 from M.R.Ry. N. K. Vakulābharaṇam, Madras.

(*a*) शब्दखण्डसारमञ्जरी.

ŚABDAKHAṆḌASĀRAMAÑJARĪ.

Foll. 1*a*—18*a*. Fol. 18*b* contains some Ślōkas taken from Ratnāvalī.

Same work as that described under No. 4309 of the D.C.S. MSS., Vol. VIII. By Bhavānanda-Vāgīśa.

Complete.

---

(*b*) कारकव्याख्या.

KĀRAKAVYĀKHYĀ.

Foll. 19*a*—30*b*.

A commentary on the Kāraka chapter which forms a portion of Pāṇini's grammar.

Incomplete.

**Beginning:**

नत्वा शम्भोः पदाम्भोजं जयरामः समासतः ।
करोति कारकव्याख्यामिह सङ्क्षेपावतां मुदे ॥

तत्र कारकाणि कर्तृकर्मकरणसम्प्रदानापादानाधिकरणानि षट् । तत्त्वं च न क्रियानिमित्तत्वम्, चैत्रस्य तण्डुलं पचतीत्यादौ सम्बन्धिनि चैत्रादावतिव्याप्तेः । अनुमतिप्रकाशनद्वारा सम्प्रदानादेरिव तण्डुलादिसम्पादनद्वारा सम्बन्धिनोऽपि पाकादिक्रियानिमित्तत्वात् । किन्तु क्रियान्वितविभक्त्यर्थान्वितं तत् । अस्ति च कर्तृकर्मादौ क्रियान्वितविङ्विभक्त्यर्थान्वयः । न तूदाहृते सम्बन्धिनि, षष्ठ्यर्थसम्बन्धस्य तण्डुलादिनामार्थान्विततया क्रियानन्वितत्वात् । चैत्रस्य पचतीत्यादावपि तण्डुलादिपदाध्याहारेणैव बोधः ।

**End**

आख्यातार्थः आश्रयत्वम् । तथा च हिमवन्निष्ठसंयोगध्वंसाव्यवहितोत्तरक्षणवृत्त्याद्यपृथिवीसंयोगाश्रय . . . . . . . . . . . . . . . . . . . . . . . काशीतो गङ्गा प्रवहतीत्यादिवारणायाव्यवहितेति । आद्येति वैकुण्ठसंयोगध्वंसाव्यवहितोत्तरक्षणे भूसम्बन्धस्य काशीसंयोगध्वंसाव्य.

---

R. No. **5445.**

Palm leaf. 16 × 1¼ inches. Foll 58 Lines, 7 in a page. Grantha. Injured.

Presented in 1928-29 by M.R.Ry Rāmanātha Śastri, Krṣṇarājapuram, Trichinopoly district.

विश्वप्रकाशः.

VIŚVAPRAKĀŚAḤ

Same work as that described under No. 1745 of the D.C.S. MSS., Vol. III

Incomplete.

---

R. No. **5446.**

Palm-leaf. 16 × 1½ inches. Foll. 104. Lines, 10 in a page. Grantha. Injured.

Presented in 1928-29 by M.R.Ry. Rāmanātha Śāstri, Krṣṇarājapuram, Trichinopoly district.

(a) तुलाकावेरीमाहात्म्यम्.
TULĀKĀVĒRĪMĀHĀTMYAM.

Foll. 1a—80b.

Same work as that described under No. 2434 of the D.C.S. MSS., Vol. IV, Part II.

Complete in 29 Adhyāyas.

---

(b) कार्तिकमाहात्म्यम्.
KĀRTIKAMĀHĀTMYAM.

Foll. 81a—104b.

Same work as that described under R. No. 1216 ante, but with slight difference in readings.

Contains 1 to 28 Adhyāyas.

The scribe adds—

विषुनामसंवत्सरे फाल्गुनमासे शुक्लपञ्चम्यां शुक्रवासरे रोहिणीऋक्ष-युते रघुनाथशास्त्रिणा लिखितमिदं पुस्तकम् ।

---

R. No. **5447.**

Palm-leaf. 17 × 1½ inches. Foll. 35. Lines, 10 in a page. Grantha. Injured.

Presented in 1928–29 by M.R.Ry. Rāmanātha Śāstri, Kṛṣṇarāja-puram, Trichinopoly district.

ब्रह्मसूत्रभाष्यव्याख्या—भामती.
BRAHMASŪTRABHĀṢYAVYĀKHYĀ : BHĀMATĪ.

Same work as that described under No. 4673 of the D.C.S. MSS., Vol IX. By Vācaspatimiśra.

Begins in the course of the fourth Pāda of the first Adhyāya and ends in the first Pāda of the second Adhyāya.

---

R. No. **5448.**

Palm-leaf. 15½ × 1¼ inches Foll. 113. Lines, 8 in a page. Grantha Slightly injured.

Presented in 1928–29 by M.R.Ry. Rāmanātha Śāstri, Kṛṣṇarāja-puram, Trichinopoly district.

तत्त्वचिन्तामणिः.

TATTVACINTĀMAṆIḤ.

Same work ae that described under No. 3984 of the D.C.S. MSS., Vol. VIII. By Gaṅgēśōpādhyāya.

Contains the Śabdakhaṇḍa complete.

---

R. No. 5449.

Palm-leaf. 16 × 1½ inches. Foll. 43. Lines, 5 in a page. Nandināgarī Injured.

Presented in 1928–29 by M.R.Ry. Rāmanātha Śāstri, Kṛṣṇarājapuram, Trichinopoly district.

मार्गशीर्षमाहात्म्यम्

MĀRGAŚĪRṢAMĀHĀTMYAM.

Deals with the religious importance of the month of Mārgaśīrṣa.

Complete.

**Beginning;**

ब्रह्मोवाच—

वक्तव्यं किं तथा पूजा ध्यानमन्त्रादिकं च यत् ।
तत्र यत् क्रियते कार्यं तत्सर्वं ब्रूहि मेऽच्युत ॥

श्रीभगवान्—

साधु पृष्टं त्वया ब्रह्मन् . . . . . कारिणा ।
यस्मिन् कृते कृतं सर्वमिष्टापूर्तादिकं च यत् ॥
सर्वयज्ञेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ।
तत्फलं समवाप्नोति मार्गशीर्षे कृते सुत ॥
तुलापुरुषदानाद्यैर्यत्फलं लभते नरः ।
तत्फलं प्राप्यते पुत्र माहात्म्यश्रवणात् किल ॥

* * * *

**Colophon:**

इति श्रीमत्स्कान्दपुराणे मार्गशीर्षमाहात्म्ये प्रथमोऽध्यायः ॥

**End:**

सर्वेषां चैव मासानां मार्गशीर्षो मम प्रियः ।
करोति यो नरो भक्त्या तस्य पुण्यफलं शृणु ॥

तीर्थाटनेन यत्पुण्यं यत्पुण्यं व्रतकोटिभिः ।
. . . . . यत्पुण्यं तत्पुण्यं समवाप्नुयात् ॥
ब्राह्मणो ब्रह्मवर्चस्वी क्षत्रियो विजयी भवेत् ।
वैश्यो निधिपतित्वं च शूद्रः शुद्धोऽथ पातकात् ॥
यद्दुर्लभं दुरावापं त्रिषु लोकेषु . . . ।
तत्सर्वं प्राप्नुयान्मर्त्यो महोमासे न संशयः ॥

* * * *

मम प्रीतिकरं मासं सर्वदा मम वल्लभम् ।
सर्वं संप्राप्यते पुण्यं प्रसादाच्च चतुर्मुख ॥

**Colophon:**

इति श्रीमत्स्कान्दपुराणे मार्गशीर्षमाहात्म्ये ब्रह्मनारायणसंवादे षोडशोऽध्यायः ।

The scribe adds—

विलम्बिवर्षे माघस्य शुक्लपक्षे द्वितीयके ।
आनन्दतीर्थलिखितं प्रीत्यै माधवमध्वयोः ॥

---

## R. No. 5450.

Palm-leaf. 16½ × 1½ inches. Foll. 4. Lines, 9 in a page. Telugu. Good.

Presented in 1928–29 by M.R.Ry. Rāmanātha Śāstri, Kṛṣṇarājapuram, Trichinopoly district.

प्रातिशाख्यव्याख्यानम्—त्रिभाष्यरत्नम्
PRATIŚĀKHYAVYĀKHYĀNAM: TRIBHĀṢYARATNAM.

Same work as that described under No. 931 of the D.C.S. MSS., Vol. II.

Incomplete.

---

## R. No. 5451.

Palm-leaf. 17 × 1¼ and 16 × 1 inches. Foll. 135. Lines, 7 in a page. Grantha. Slightly injured.

Presented in 1928–29 by M.R.Ry. Rāmanātha Śāstri, Kṛṣṇarājapuram, Trichinopoly district.

अनर्घराघवव्याख्या.

ANARGHARĀGHAVAVYĀKHYĀ.

Same work as that described under R. No. 484 ante. By Harihara. Breaks off in the seventh act.

---

## R. No. 5452.

Palm-leaf. 16½ × 1½ inches. Foll. 50. Lines, 6 in a page. Nandināgarī. Injured.

Presented in 1928–29 by M.R.Ry. Rāmanātha Śāstri, Kṛṣṇarājapuram, Trichinopoly district.

रतिरहस्यदीपिका.

RATIRAHASYADĪPIKĀ.

Same work as that described under No. 3902 of the D.C.S. MSS., Vol. VIII. By Kāñcīnātha.

Contains 1 to 9 Paricchēdas complete and 10th incomplete. Wants the beginning in the first Paricchēda.

---

## R. No. 5453.

Palm-leaf. 1½ × 1⅝ inches. Foll. 6. Lines, 7 in a page. Telugu. Much injured.

Presented in 1928–29 by M.R.Ry. Rāmanātha Śāstri, Kṛṣṇarājapuram, Trichinopoly district

ग्रहफलानयनलक्षणम्.

GRAHAPHALĀNAYANALAKṢAṆAM.

Deals with the manner of calculating the good and bad results when a particular planet stands in a particular position.

Incomplete

**Beginning:**

कोटिफलं कक्ष्याकेन्द्रे त्रिभिर्जीवया शोधयेत् । एवं कृते स्फुटकोटिः । बाहुफलवर्गस्फुटकोटिवर्गयोगान्मूलचलकर्णः ।

बाहुफलाख्यग्रहफलव्युत्क्रमज्याजालग्रहफल . . . रमफलानां विनियोगमूलमुत्तरत्र वक्ष्यामः । ग्रहाणां फलानयनं तत्संख्यातलक्षणोक्तं सार्धश्लोकद्वयं लिख्यते ---

व्यासार्धज्याबाहुज कर्णभक्तं त्वाजे पादे त . . . ज्याक्रमात् ।
त्रिज्याभ्यस्तं खेटजं तत्पराख्यं कर्णेनाप्तं तत्फलज्येतु युग्मे ॥

**End :**

केन्द्रस्याजपदे चेत्पद्गतभुजयुग्मपरिध्यन्तरेण संगुण्य त्रिज्यया द्विज्याभागादिफलमानीय तत्फलं युग्मपदादिपरिधौ हीने योज्यम् । अधिके च पदादिपरिधौ विशोधयेत् । शेषं स्फुटपरिधि । यदा च ज्यापदादिपदा . . युग्म सदादिपरिध्यधिका भवति परिध्यन्तर.

---

R. No. **5454.**

Palm-leaf. 16 × 1¼ inches Foll. 246. Lines, 10 in a page. Grantha Slightly injured.

Presented in 1928–29 by M.R.Ry. Rāmanātha Śāstri, Kṛṣṇarājapuram, Trichinopoly district

महाभारतम्.

MAHĀBHĀRATAM.

Same work as that described under No. 1915 of the D.C.S. MSS., Vol. IV, Part I.

Contains the Ādiparvan incomplete.

---

R. No. **5455.**

Palm-leaf. 12¼ × 1 inches. Foll. 23. Lines, 5 in a page. Grantha. Good.

Presented in 1928–29 by M.R.Ry. Rāmanātha Śāstri, Kṛṣṇarājapuram, Trichinopoly district.

(*a*) शिववेदपादस्तवः.

ŚIVAVĒDAPĀDASTAVAḤ.

Foll. 1*a*—15*b*.

Same work as that described under R. No. 488(*n*) ante. With slightly different readings in the beginning and end.

Complete.

**Beginning:**

शुक्लाम्बरधरं . . . शान्तये ॥

कृपासमुद्रं सुमुखं त्रिनेत्रं जटाधरं पार्वतिवामभागम् ।

सदाशिवं रुद्रमनन्तरूपं चिदम्बरेशं हृदि भावयामि ॥

आनन्दनृत्तसमये नटनायकस्य
पादारविन्दमणिनूपुरशिञ्जितानि ।
आनन्दयन्ति मदयन्ति विमोहयन्ति
रोमाञ्चयन्ति नयनानि कृतार्थयन्ति ॥

* * * *

अस्य श्रीवेदपादस्तोत्रमहामन्त्रस्य जैमिनिर्भगवानृषिः, अनुष्टुप् छन्दः, श्रीचिदम्बरेश्वरो देवता । प्रसाद . . . गः ।

ध्यानम्—

ध्यानं प्रथममाचष्टे सूतः पौराणिकोत्तमः ।
प्रत्यक्षजैमिनिस्तुत्यै नृणां ध्यायेन्महत्फलम् ॥
सप्तार्णवपरिक्षिप्तां द्वीपैस्सप्तभिरङ्किताम् ।
पञ्चाशत्कोटिविस्तीर्णां ध्यायेत्सर्वंसहां महीम् ॥

* * * *

भस्मोद्धूलितसर्वाङ्गं परमानन्दताण्डवम् ।
एवं ध्यायेत्परेशानं पुण्डरीकपुरेश्वरम् ॥
पुण्डरीकपुराधीशं पुण्डरीकाजिनाम्बरम् ।
पुण्डरीकरुचिं वन्दे पुण्डरीकाक्षसेवितम् ॥

ऋषय ऊचुः—

वेदपादस्तवकृतं पुलकाञ्चितविग्रहम् ।
धर्मसूत्रप्रणेतारं जैमिनिं प्रणतोऽस्म्यहम् ॥

**End:**

इत्यनेन स्तवेनेशं स्तुत्वासौ जैमिनिर्मुनिः ।
स्नेहाश्रुपूर्णनयनः प्रणनाम सभापतिम् ॥
मुहुर्मुहुः पिबन्नीशताण्डवामृतमङ्गलम् ।
सर्वान् कामानवाप्यान्ते गाणपत्यमवाप सः ॥
पादं वाप्यर्धपादं वा श्लोकं श्लोकार्धमेव वा ।
यस्तु धारयेन नित्यं शिवलोकं स गच्छति ॥
अधीत्य विस्मृतो वेदान् वेदपादस्तवं पठन् ।
स चतुर्वेदसाहस्रपारायणफलं लभेत् ॥

कमलभवमुकुन्दनिर्जरेन्द्रस्तुतिनतिसंभ्रमनृत्तविभ्रमाय ।
अचलपतिसुतासखाय तुभ्यं कनकसभापतये नमः शिवाय ॥

(b) सिंहानुवाकव्याख्या.
SIṀHĀNUVĀKAVYĀKHYĀ.

Foll 16*a*—23*b*.

Same work as that described under No. 1016 of the D.C.S. MSS., Vol II.

Almost complete.

## R. No. 5456.

Palm-leaf. 14½ × 1 inches. Foll. 90. Lines, 5 in a page. Grantha. Injured.

Presented in 1928–29 by M.R.Ry. Rāmanātha Śāstri, Kṛṣṇarāja puram, Trichinopoly district.

सामवेदगानम्—प्रकृतिः.
SĀMAVĒDAGĀNAM: PRAKṚTIḤ.

Same work as that described under No. 47 of the D.C.S. MSS., Vol. I, Part II.

Incomplete.

## R. No. 5457.

Palm-leaf. 14 × 1 inches. Foll. 84. Lines, 7 in a page. Grantha. Injured.

Presented in 1928–29 by M.R.Ry. Rāmanātha Śāstri, Kṛṣṇarāja-puram, Trichinopoly district.

(*a*) उपाकर्मप्रयोगः (छन्दोग).
UPĀKARMAPRAYŌGAḤ (CHANDŌGA).

Foll. 1*a*—43*a*.

Similar to the work described under No. 3580 of the D.C.S. MSS., Vol VII.

Complete.

**Beginning:**

देवान् यथापूर्वं तर्पयिष्यामः—

अग्निस्तृप्यतु. | सोमस्तृप्यतु.
ब्रह्मा तृप्यतु. | शिवस्तृप्यतु.

प्रजापतिस्तृप्यतु. रामस्तृप्यतु.
सविता तृप्यतु. वायुस्तृप्यतु.
इन्द्रस्तृप्यतु. आदित्यस्तृप्यतु.
बृहस्पतिस्तृप्यतु. चन्द्रमास्तृप्यतु.
त्वष्टा तृप्यतु. नक्षत्राणि तृप्यन्तु.
विष्णुस्तृप्यतु.

End :

कयानश्चि-त्र आभू-इवात्. ऊ ता इ स दा वार्धस्सा ऽ२-३-४-स्वा। कया शाऽनु चीऽनुष्ठा २ नु याऽनु-पाऽ३४५र्तो ३-हाइ राहवे नमः। केतुं कृण्वन्न केत्ववो, केतोर्माया अपेशा साऽ२ इ. समुषद्भिरजाऽ १-२-३ २. कहिं. आ ऽ २. याथो आ ऽ ३ ४ ५. केतुभ्यो नम इति।

---

(*b*) उदकशान्तिप्रयोगः.

UDAKAŚĀNTIPRAYŌGAḤ.

Foll. 43*a*—47*a*. Fol. 47*b* is left blank.

Similar to the work described under No 3574 of the D.C.S. MSS., Vol. VII.

Complete

**Beginning :**

प्रमित्राय प्राहा. आ ऽ २र्यम्णा इ. सचाऽ२द्दा. धियौ ऽ-२ हुवा इ. आर्तावसा २. वराऽ२हो। धियौऽ२हुवा इ। वरुणे . . दिवं वचाः। स्होभ्राऽ३ होइ। राजौ ऽ२. पृगायताऽ३-१-२. वाऽ२-३। ऊंऽ३४-वा५। प्र५मित्राय प्रौहोवा। आर्यम्णा। औहो ऽ३४-३। औहोऽनुवा। साचार्थम्।

**End :**

प्रियं मित्राऽ३-४. औहोवा। मटेर. शाथ साऽ२-३-४. इषाम्। उह् एऽ६ हा उ वा असि। ओम्।

---

(*c*) उद्वाहप्रयोगः (छन्दोग).

UDVĀHAPRAYŌGAḤ (CHANDŌGA)

Foll. 48*a*—52*b*.

Similar to the work described under No. 3789 of the D.C.S. MSS., Vol. VII.

Incomplete.

**Beginning:**

अथातः स्मार्तान् पदार्थाननुक्रमिष्यामः । तत्र मन्त्रपाठानुसारेण विवाहकर्म वक्ष्महे । ब्रह्मचारी षडङ्गवेदव्रताद्यनुष्ठानसहितमधीत्य मीमांसया विचारं चतुरस्त्वं विवाहं स्नानं च कुर्विति गुरुणाभ्यनुज्ञातः स्नानकस्सन् पुण्याहनि विवाहं कुर्यात् । तत्रैवं प्रयोगः । पादौ प्रक्षाल्याचम्योदगग्रेषु दर्भेषु पवित्रपाणिरुपविश्य दर्भान् धारयमाणः सकृत्प्राणायामं कृत्वा.

* * * *

शुभे शोभने मुहूर्ते . . . अस्यां पञ्चम्यां शुभतिथौ अश्विनीनक्षत्रे मेषराशौ जातस्य श्रीरामशर्मणः मम मृगशीर्षनक्षत्रे वृषभराशौ जातायाः लक्ष्मीनाम्न्या अस्याः कुमार्याश्चोद्वाहकर्माङ्गमङ्कुरार्पणकर्म करिष्ये इति सङ्कल्प्य तदङ्गं पुण्याहवाचनं करिष्ये । पुण्याहवाचनं कृत्वा ।

**End:**

नान्दीमुखीनां यद्देयं तत्प्रतिनिधित्वेनेदं सोपस्करं सदक्षिणाकं सताम्बूलं प्रपितामहिपितामहीमातृभ्यः नान्दीमुखिभ्यः संप्रददे । एवमेवान्येभ्यः ब्राह्मणाय दद्यात् । ओं भूर्भुवस्स्वरित्याद्यभ्युदयैक . .

---

(*d*) अपरप्रयोगः.

APARAPRAYŌGAḤ.

Foll. 53*a*—84*b*.

Same work as that described under No. 3531 of the D.C.S. MSS., Vol. VII.

Incomplete.

---

R. No. **5458.**

Palm-leaf. 11⅓, 12 × 1½ inches. Foll. 22. Lines, 8 in a page. Grantha. Slightly injured.

Presented in 1928–29 by M.R.Ry. Rāmanātha Śāstri, Kṛṣṇarājapuram, Trichinopoly district.

(*a*) नक्षत्रकारिका.

NAKṢATRAKĀRIKĀ.

Foll. 1*a*—3*b*.

Similar to the work described under No. 14050 of the D.C.S. MSS., Vol. XXIV.

Complete.

**Beginning :**

कृत्तिकास्वग्न आयाहिमन्त्रोग्निर्देवता मताः ।
प्रजापते नत्वदेतान् रोहिण्याग्निर्देवतामतः ॥
उच्चानेजा मृगशिरा नारका सोमदेवताः ।
आरु(र्द्रा)नु रुद्रदेवत्या आपो राजातुरस्स्मृतः ॥
पुनर्वसुमहित्राणामदितिर्देवतामता ।
बृहस्पतेतिमन्त्रस्य पुष्ये देवो बृहस्पतिः ॥

**End :**

अश्विनीनक्षत्रमश्विनी देवता—
नाके सुपर्णमुपयत्पतन्तं हृदा वेदनन्तोऽभ्यचक्षतत्वा ।
हिरण्यपक्षं वरुणस्य दूतं भरणी नक्षत्रं . मदेवता ॥
यमस्य योनौ शकुनं भरण्यम् ॥

---

(*b*) आयुष्यहोमलक्षणम्.

ĀYUṢYAHŌMALAKṢAṆAM.

Foll. 3*b*—5*a*.

Similar to the work described under R. No. 674(*i*) ante

Complete.

**Beginning :**

अथातस्संप्रवक्ष्यामि आयुर्होमस्य लक्षणम् ।
आयुष्ये सति मर्त्यानां पुरुषार्थफलं भवेत् ॥
षोडशोर्ध्वशतं वर्षं जीवतीति श्रुतौ विधिः ।
दानार्चनजपध्यानं क्रियाहीनस्य हीयते ॥
निकृतिस्तस्य कर्तव्यं पुरुषेण हितैषिणा ।
जातकस्य च जन्मर्क्षे प्रतिमासं करोति यः ॥
सर्वपापविनिर्मुक्तो दीर्घमायुरवाप्नुयात् ।
तस्मात्सर्वप्रयत्नेन होतव्यं वैदिकायुषे ॥
अलङ्कृत्य गृहं सर्वं गोमयेनोपलेपयेत् ।
दूर्वाकुशशमीपत्रैर्लाजपुष्पाक्षतैस्तथा ॥

**End :**

एवं सर्वप्रयत्नेन मासे मासे च कारयेत् ।
वत्सरे वत्सरे वास्य पुत्रपौत्राभिवृद्धिदम् ॥
सर्वसम्पत्समृद्धिःस्यादायुष्यं च (वि)वर्धते ।
सर्वलोकहितार्थाय कृतवान् गौतमो मुनिः ॥

**Colophon :**

आयुष्यहोमं संपूर्णम् ॥

Fol. 5 contains Aindragāyatrīmantra

---

(c) वरलक्ष्मीव्रतकल्पः.

VARALAKṢMĪVRATAKALPAḤ.

Foll. 6a—11b.

Same work as that described under No. 8484 of the D.C.S. MSS., Vol. XVI; but with slightly different readings.

Complete.

**Beginning :**

शुक्लाम्बरधरं . . . विघ्नोपशान्तये ॥

विघ्नेश्वरपूजां कृत्वा सङ्कल्प्य, कलशपूजां कृत्वा पूजाद्रव्याणि देवम् आत्मानं च प्रोक्ष्य ।

एकदन्तं शूर्पकर्णं गजवक्त्रं चतुर्भुजम् ।
पाशाङ्कुशधरं देवं ध्यायेत् सिद्धिविनायकम् ॥

* * * *

शुभतिथौ वर्षे वर्षे प्रयुक्तवर्षे वर्षे प्रीत्यर्थं वरलक्ष्मीमुद्दिश्य सर्वाभीष्टसिद्ध्यर्थं वरलक्ष्मीपूजां करिष्ये ।

**End :**

दोरबन्धनम्—

नवतन्तुसमायुक्तं नवसूत्रमिदं शुभम् ।
कुङ्कुमोक्तासुमाङ्गल्यं बध्नीयाद्दक्षिणे करे ॥

प्रार्थना ।

पातिव्रत्यं पशून् पुत्रान् धनधान्यादिसंपदः ।
देहि मे तान् सदास्माकं देवि तुभ्यं नमो नमः ॥

प्रार्थ्य उपायनम् । इन्द्रारा ।

(d) ऋषिपञ्चमीव्रतकल्पः.

RṢIPAÑCAMĪVRATAKALPAḤ.

Foll. 12a—18b.

Similar to the work described under No. 8233 of the D.C.S. MSS., Vol. XVI.

Incomplete.

**Beginning :**

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥

ब्राह्मणान् त्रिः प्रदक्षिणीकृत्य सर्वेभ्यो ब्राह्मणेभ्यो . . , नमस्कारः । अशेषे . . . र्स्वीकृत्य ममेह जन्मनि जन्मान्तरे च ज्ञानाज्ञानकृतसमस्तपापक्षयार्थं करिष्यमाणारुन्धतीसमेतकश्यपादिसप्तर्षिपूजाङ्गमादौ शरीरशुद्ध्यर्थमपामार्गकाष्ठैरष्टोत्तरशतं दन्तधावनपूर्वकं कावेरीस्नानमहं करिष्ये । स्नात्वा वनस्पतिप्रार्थना ।

* * * *

काश्यपस्सर्वलोकेशस्सर्वलोकेषु शाश्वतः ।
नराणां क्षीणपापानामृषिरूपाय नमः ॥

कश्यपं ध्यायामि ।

अत्रयेच नमस्तुभ्यं सर्वलोकहितैषिणे ।
तपोरूपाय शान्ताय ब्रह्मणेऽमिततेजसे ॥

अत्रिं ध्यायामि ।

**End :**

विघ्नेश्वरपूजासङ्कल्पः, ऋषिपञ्चमीव्रतोद्यापनं करिष्ये
पूर्वेद्युरेकभुक्ताशीतरेद्युरुदये शुचिः ।
गङ्गायास्तीर्थे . . . .

---

(e) गायत्रीपञ्चरहस्यस्तोत्रम्.

GAYATRĪPAÑCARAHASYASTŌTRAM.

Foll. 19a—20a.

Complete.

**Beginning:**

अस्य श्रीपञ्जरहस्यस्तोत्रमहामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुस्साः . . . . . . . . . . . . . शक्तिर्देवता । तत् बीजम् । भर्ग इति शक्तिः । धिय इति कीलकम् । गायत्रीसावित्रीसरस्वतीप्रसादसिद्ध्य . . . . . . . . . दिकरन्यासः ॥

ध्यानम्—

मणिसिंहासनासीनां मुनिबृन्दनिषेविताम् ।
वरदाभयदीप्ताङ्गीं माणिक्यमकुटोज्ज्वलाम् ॥

**End:**

महापातकयुक्तो वा मुक्तो वा . . . . . ।
गायत्रीपञ्जरं जप्त्वा पातकं नोपलिप्यते ॥
य इदं श्रद्धया युक्तस्त्रिसन्ध्यायां पठेद् द्विजः ।
सर्वपापविनिर्मुक्तो ब्रह्मभूयाय कल्पते ॥

**Colophon:**

इति वसिष्ठसंहितायां ब्रह्मसनत्कुमारसंवादे गायत्रीपञ्जररहस्यस्तोत्रं संपूर्णम् ।

(*f*) दक्षिणामूर्त्यष्टकम्.

DAKṢIṆĀMŪRTYAṢṬAKAM.

Foll 21*a*—22*b*.

Same text as that described under No. 10992 of the D.C.S. MSS., Vol. XIX. By Śaṅkarācārya.

Incomplete.

---

R. No. **5459.**

**Palm-leaf.** 15 × 1½ inches. Foll. 335. Lines, 6 in a page. Telugu. Injured.

Presented in 1928–29 by M.R.Ry. Chetlūr Sundara Rāghavācariyar, M.A., L.T., Madras

**रामायणम्.**

RĀMĀYAṆAM.

Same work as that described under No. 1806 of the D.C.S. MSS., Vol. IV, Part I.

Begins in the Āraṇyakāṇḍa and breaks off in the Yuddhakāṇḍa.

## R. No. 5460.

Palm-leaf. 18 × 1 inches. Foll. 148. Lines, 8 in a page Grantha. Slightly injured.

Presented in 1928-29 by M.R.Ry. Chetlūr Sundara Rāghavācāriyar, M.A., L.T., Madras.

अधिकरणसारावलिव्याख्या—अधिकरणचिन्तामणिः.

ADHIKARAṆASĀRĀVALIVYĀKHYĀ: ADHIKARAṆA-CINTĀMAṆIḤ.

Same work as that described under No. 4862 of the D.C.S MSS., Vol. X. By Varadanātha alias Kumāra Vēdāntācārya.

Breaks off in the fourth Pāda of the fourth Adhyāya.

---

## R. No. 5461.

Paper. 10½ × 9½ inches. Foll. 10. Lines, 20 in a page. Grantha. Good.

Restored in 1928-29 from the Library MS. described under R. No. 48 of the Tamil part.

श्रीवचनभूषणार्थविचारः.

ŚRĪVACANABHŪṢAṆĀRTHAVICĀRAḤ.

Foll. 1*a*—9*b*. Fol. 10 is left blank.

Same work as that described on page 1061 ante of the Triennial Catalogue of Sanskrit MSS., Vol. I.

---

## R. No. 5462.

Paper. 10½ × 9½ inches. Foll. 44. Lines, 20 in a page. Grantha. Good.

Restored in 1928-29 from a Library MS. described under R. No. 97 of the Tamil part.

संप्रदायचन्द्रिका.

SAMPRADĀYACANDRIKĀ.

Foll. 1*a*—43*a*. Foll. 43*b* and 44 are left blank.

Same work as that described on page 1069 ante of the Triennial Catalogue of Sanskrit MSS., Vol. I.

Complete.

R. No. **5463.**

Palm-leaf. 16 × 1 inches. Foll. 45. Lines, 8 in a page. Telugu. Injured.

Presented in 1928–29 by M.R.Ry. Rāmanāthaśāstri, Kṛṣṇarājapuram, Trichinopoly district.

पञ्चपादिकाविवरणम्.

PAÑCAPĀDIKĀVIVARAṆAM.

Same work as that described under No. 4667 of the D.C.S. MSS., Vol. IX. By Prakāśātman.

Wants the beginning and end.

---

R. No. **5464.**

Palm-leaf. 18 × 2 inches. Foll. 51. Lines, 9 in a page. Telugu. Slightly injured.

Presented in 1928–29 by M.R.Ry. Rāmanāthaśāstri, Kṛṣṇarājapuram, Trichinopoly district.

पञ्चपादिकाविवरणव्याख्यानम्—तत्त्वदीपनम्.

PAÑCAPĀDIKĀVIVARAṆAVYĀKHYĀNAM · TATTVADĪPANAM.

Same work as that described under No. 4670 of the D.C.S. MSS., Vol. IX. By Akhaṇḍānanda.

Wants the beginning and end.

---

R. No. **5465.**

Paper. 10½ × 9½ inches. Foll. 54. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1929–30 from a MS. brought by M.R.Ry. Nārāyaṇasāmi Śāstri, Mylapore, Madras.

अस्यवामीयसूक्तम्, सभाष्यम्.

ASYAVĀMĪYASŪKTAM WITH BHĀṢYAM.

Foll. 1*a*—54*a*. Fol. 54*b* is left blank.

A commentary on the 164th Sūkta beginning with अस्य वाम etc., of the first Maṇḍala of the Ṛgvēda. By Ātmānandātman son of Viṣṇu of Gautamagōtra. He refers to Skandasvāmin, Udgītha, Bhāskara, Upavarṣa, Dramiḍasvāmin disciple of Śaṅkara, Bhaṭṭabhāskara and some others.

Complete.

Beginning :

अस्य द्विपञ्चाशदृत्पस्तवं त्वेतत् । अस्यवामस्य द्विपञ्चाशन्मन्त्रात्मकमिदं सूक्तं दीर्घतमसमात्मदैवतम् । यद्यपीह स्कान्दभाष्यादिषु भाष्यकारैः उद्गीथभास्करादिभिः शौनकं च वेदमित्रं च बृहद्देवताकारं चानुक्रमणिकाकारं च विष्णुधर्मोत्तरं चानादृत्य सूक्तव्याख्या कृता । तथापि वयमत्र स्कन्दादिव्याख्या अधियज्ञविषया एव क्वचिन्निरुक्तानुसारादधिदैवतविषया इति विनिश्चित्य शौनकादिरीतिमाश्रित्याध्यात्मं व्याख्यास्यामः ।

अत्र शौनकादिमतसंग्रहीतुर्वररुचेरनुक्रमणिका । अस्य द्विपञ्चाशदृत्पस्तवं त्वेतत् । अल्पस्य सूक्ष्मस्य ब्रह्मणः प्रतिपादनमत्रेत्यर्थः । अपर आह—अल्पिकाया देवतायाः स्तुतिरत्रेति देवताया एवाल्पैः पदैः स्तवोऽत्रेत्यन्य आह । तदुभयमपि वेदमित्रो निषेधति न देवताल्पिका काचिदन्यत्रापि पदाल्पता । उपेन्द्र नव वीर्ये च तन्नोमित्रोऽल्पिका भवेदिति संशयोत्थापनप्रश्नप्रतिवाक्यानि अत्र प्रायेण संशयोत्थापनमाशङ्कोत्तरमत्र प्रायेण । प्रश्नाश्चात्र दृश्यन्ते—तेषां प्रतिवचनानि चात्र । प्रायेणायमर्थः ।

* * * *

सर्वमेतत्सूक्तमध्यात्मपरम् । नात्रान्यार्थता वक्तुं शक्या । विष्णुधर्मोत्तरे बृहति उत्तरार्धे दाशरथिरामं प्रति पुष्करनाम यज्ञो राजधर्मादिकमुक्त्वाऽथर्वविधानं सामविधानमृग्विधानं च समाप्य मोक्षार्थे अस्यवामीयसूक्तमुक्तवान् । तदनुसारेण तत्सूक्तं विवृणोमि—

अस्यवामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः ।
तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥

अस्यामृचि अवस्थात्रयोक्तिपूर्वमात्मोच्यते । चित्स्वरूपः अस्य प्रत्यक्षादिप्रमाणसन्निहितस्यापरोक्षस्य वामस्य कुब्जस्य शरीरेण परिच्छिन्नस्य यथा तस्य परोक्षस्य पलितस्य वृद्धस्यापरिच्छिन्नस्य व्यापकस्य तथा होतोद्गन्ता विचारकः । तस्य होतुर्जाग्रदवस्थायां नाम्ना विश्वस्य प्रथमस्य भ्रातुः द्वितीयो भ्राता मध्यमः अस्ति ।

* * * *

प्रतीचि माया मूलाख्या तूलाख्या चेति—

सा च द्विविधा—

विक्षेपावारभेदेन तूलाख्या च पुनर्द्विधा ।
ईशे सावरणं नास्तीत्येवमीशे द्विधैव सा ॥
त्रिधा जीवे द्विधा देवे एवं पञ्चविधैव सा ॥ इत्युपवर्षवचनात् ।

* * * *

अत्रारूढानां लक्षणानि श्रीशङ्कराचार्यशिष्यद्रमिडस्वामिनोक्तानि—

अप्रयत्नसमाधिस्थो देहमात्रस्थितिक्रियः ।
आरूढःस्यात् परानन्दी बाललीलोचितक्रियः ॥ इति ।

**End:**

वृद्धपराशरः—

अस्यवामीयकं चैव ब्रह्महा शुद्धये जपेत् ।
विचारयेत्तदर्थं चेज्जीवन्मुक्तो न संशयः ॥

कल्पस्तु—

स्वर्गी विष्ण्वादिलोकी दुरितजनजनितब्रह्मभूतेश्च लिङ्गं
ज्ञानं स्थूलाख्यदेहो भवजलधिहृतो द्वारकोऽप्यष्टमोऽसौ ।
एतेऽप्यन्ये पदार्था मुनिवरकथिता अस्यवामीयसूक्ते
संसारा . . . , सणाय श्रुतपठितमतास्तारयेयुर्भवाब्धिम् ॥

**Colophon:**

अस्यवामीयसूक्तभाष्यं समाप्तम् ।

अत्र वृद्धशौनकः—

उचथ्यदीर्घतमसा जप्येन स्वाघनुत्तये ।
ब्रह्मवर्चसतेजस्वी दिव्यधीर्दुस्सहो मुनिः ॥
अङ्गिरा ब्रह्मजस्तं सदुचथ्यो ममतापतिः ।
तस्मादधीतवेदार्थीनतज्ञातो बृहस्पतिः ॥
रिरंसुर्ममतां तां नो गुरुर्लेभे सुरदिताम् ।
उचथ्यकान् यजन् यज्ञं जगाम प्रियचर्मणः ॥
लब्धावकाशस्तां रन्तुमारेभेऽथ बृहस्पतिः ।
चुक्रोशोदरसंस्थोऽपि मुनीश सिप(क्षिप)मामितिः ॥

रेतो यतोऽत्र सङ्कीर्णं मन्दितो गुरुरब्रवीत् ।
जात्यन्धो भव पापिष्ठ इत्युक्त्वा तापस . . . ॥
. . . ददौ वरं तस्मै ज्ञानचक्षुः शुचिर्भव ।
अथोपनीतमात्रोऽयं चक्रे दीर्घतमादिव ।
स्त्रीगन्धघायकायक्ष्म . . . को निष्टयोषिति ।
एवमादि दिवाजातं रात्रौ हवति सूक्ततः ॥
उद्विग्नैर्मुनिभिस्सोऽथ मञ्जूषायां प्रवेशितः ।
मञ्जूषा सा विपाशायां क्षिप्त्वा नद्यां प्रवाहिना ॥
प्रतीपेन ततोऽङ्गेन गृहीता स्यान्नृपेण सा ।
स दीर्घतमसं ज्ञात्वा दत्ता भार्या अथ स्वयम् ॥
अजीजनत्सुतानस्य दास्याम्युशिजिचात्मजे । ?
पुत्रमुत्पाद्य कक्षीवत्संज्ञं गोधर्ममाचरन् ॥
ततो दीर्घतमा वृद्धगोतमो गौतमस्ततः ।
गौतमेषु तदारभ्य सूक्तार्थः स्फुरति स्फुटः ॥
तत्कुले विप्लुते विष्णुस्ततो विष्णुप्रकाशकः ।
आत्मानन्दस्तदुत्पन्नस्तेनेदं भाष्यमीरितम् ॥

**Colophon :**

आत्मानन्दविरचितं वामीयसूक्तभाष्यं समाप्तम् ।

---

R. No. **5466.**

Paper. 1[illegible]½ × 9½ inches. Foll 82 Lines, 20 in a page. Dēvanāgari Good.

Transcribed in 1929–30 from a MS. of M.R.Ry. Brahmadatta Nambūdirippāḍ Kūḍalūr mana, Tritala, Malabar district.

## परिभाषावृत्तिव्याख्या.
## PARIBHĀṢĀVṚTTIVYĀKHYĀ.

Foll. 1a—81a. Fol. 81b is left blank.

A commentary by Rāmabhadradīkṣita son of Yajñarāmadīkṣita on the Paribhāṣāvṛtti, a work on grammar.

Wants the beginning in the first Pāda of the first Adhyāya and breaks off in the first Pāda of the second Adhyāya.

**Beginning :**

॥ न हि कार्यी निमित्तत्वेनाश्रीयते ॥

स्यादेतत् । वित्थेत्यादावित्र क्ङिति चेति निषेधः स्यात् ; थस्य कार्यत्वविरहेण निमित्तत्वसंभवात् । उदात्तप्रतिपत्त्या यादेरच एव कार्यत्वात् रुदिथेत्यत्र न स्यात् । तस्येटः प्रति कार्यत्वेन निमित्तत्वविरहादिति । तत्राह—यदित्यादि । रुदिथेत्यत्र थस्येटः प्रति कार्यत्वं गुणं प्रति निमित्तत्वं चाविरुद्धमिति भावः । अध्यायक इति अनिग्लक्षणाया वृद्धेः क्ङिति चेति प्रतिषेधं मन्यते । अरिरिषतीति ।

*        *        *        *

**Colophon :**

इति श्रीयज्ञरामदीक्षितपुत्रस्य रामभद्रदीक्षितस्य कृतौ परिभाषावृत्तिव्याख्यायां प्रथमाध्यायस्य प्रथमः पादः ।

**End :**

**Colophon :**

इति श्री(यज्ञ)रामदीक्षितपुत्रस्य रामभद्रदीक्षितस्य कृतौ परिभाषावृत्तिव्याख्यायां प्रथमोऽध्यायः ।

॥ प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ।

स्वं रूपमिति स्वरूपग्रहणे प्राप्ते वचनमिदम् । लिङ्गविशिष्टस्य प्रातिपदिकस्येत्यत्र लिङ्गप्रातिपदिकस्येत्यर्थः ।

*        *        *        *

ग्रामाय गच्छतीति चतुर्थ्यपि सिध्यतीति गत्यर्थकर्मणीति न कर्तव्यमिति भाष्यार्थः । अस्मिन् पक्षे ग्रामस्य गच्छतीति षष्ठी साधुरेव । न च कर्मणेति । कर्मणा यमभिप्रैतीति सूत्रे कृत्रिमस्य कर्तुरीप्सिततमं कर्मेत्यस्य ग्रहणम् ।

---

R. No 5467.

Paper. 10½ × 9½ inches. Foll. 221. Lines, 20 in a page. Grantha and Tamil. Good.

Transcribed in 1929-30 from a MS of M R Ry. Cakravarti Nayinar of Alagrāmam, South Arcot district.

पदार्थसारः द्राविडटीकासहितः.
PADĀRTHASĀRAḤ WITH TAMIL MEANING.

Foll. 1a—224. Fol. 224b is left blank.

A treatise dealing with the Padārthas or categories in accordance with Jain religion. By Māghanandin.

Contains the Paricchēdas 23 to 30 complete.

**Beginning:**

ज्ञानदृग्बलसौख्याढ्यं ध्यानध्येयप्रकाशकम् ।
नत्वा पार्श्वजिनं वक्ष्ये मार्गणां संयमाह्वकम् ॥

* * * *

वदसमिदिकसायाणं दण्डाणं तहिन्दिआणं पंचह्लम् ।
धाळणपाळणणिग्गहचागजओ संजमो भणिओ ॥
बादरसंजळणुदए सुहुमुदए समखएय मोहस्स ।
संजमभावो णिअमा होतित्ति जिणेहि णिद्दिट्ठो ॥
बादरजजळणुदए बादरसंजमतिअं खु परिहारो ।
पमदिदर सुहुमुदए सुहुमो संजमगुणो होदि ॥
जहरवादसंजमो पुण उवसमदो होदि मोहणीअस्स ।
खअदो विअसो णिअमा होदित्ति जिणेहि णिद्दिट्ठो ॥
तदिअकसा उदएण अ विरदाविरदो गुणो हवे जुगवम् ।
बिदिअकसा उदएण असंजमो होदि णिअमेण ॥

संयमनम् संयमम् । अथवा व्रतसमितिकषायदण्डेन्द्रियाणां धारणानुपालननिग्रहत्यागजयस्संयमः ।

* * * *

अहिंसाव्रतरक्षार्थं मूलव्रतविशुद्धये ।
निशायां वर्जयेद्भुक्तिमिहामुत्र च दुःखदाम् ॥
पिपीलिकादयो जीवा न लक्ष्यन्ते यतो निशि ।
गील्यन्ते भोक्तृभिः पुंभिस्ते पुनः कबलैः समम् ॥
स्फुटिताङ्घ्रिकरा दीना ये काष्ठतृणवाहकाः ।
कुचेला दुष्फलास्सन्ति ते रात्र्याहारसेवनात् ॥

याः परेषां गृहे दास्यो याः पुत्रपतिवर्जिताः ।
या दौर्भाग्यग्रहग्रस्तास्ता निशाचारभुक्तितः ॥
विरूपो विकलाङ्गस्स्यादल्पायू रोगपीडितः ।
दुर्भगो दुष्कुलश्चैव नक्तभोजी सदा नरः ॥
रात्रिभुक्तिफलान्मर्त्या जायन्ते व्याधिपीडिताः ।
दास्यो भृत्याः परेषां च स्वबन्धुजनवर्जिताः ॥
दिवसस्याष्टमे भागे मन्दीभूते दिवाकरे ।
नक्तभुक्तिं विजानीयान्न नक्तं निशि भोजनम् ॥

* * * *

**Colophon:**

इति वीतरागसर्वज्ञप्रणीतसप्तभङ्गिसमालिङ्गितपदार्थस्य संयमस्वरूपनिरूपणं त्रयोविंशतिपरिच्छेदं(दः) ॥

**End:**

कारुण्याम्बुधिचन्द्राय नमोऽस्तु कुमुदेन्दवे ।
चिद्द्रव्यं चिद्गुणज्ञातं चित्पर्यायं च धारिणे ॥
वर्णिवर्णनपूर्णाय नमोऽस्तु कुमुदेन्दवे ॥
आर्तं रौद्रं परित्यज्य शुद्धध्यानिद्धप्रयोगिने ।
शुद्धात्मलाभचित्ताय नमोऽस्तु कुमुदेन्दवे ॥
स्वस्ति श्रीमूलसङ्घेऽस्मिन् बलात्कारगणेऽजनि ।
श्रीमाघणन्दिसैद्धान्तिः पदार्थसारदेशिकः ॥

* * * *

**Colophon:**

इति वीतरागसर्वज्ञप्रणीतसप्तभङ्गीसमालिङ्गितपदार्थसारे उपयोगनिरूपणं नाम विंशः परिच्छेदं(दः) ॥

देयाच्छ्रीधरदेवशिष्यतिलकः श्रीवासुपूज्यो मुनिः
त्रैविद्यस्तदपत्यनुत्य उदयेन्दुख्यातसैद्धान्तिकः ।
तत्पुत्रः कुमुदेन्दुयोगितिलकस्तत्सूनुरत्युन्नतः
सिद्धान्तार्णवचन्द्रमाः सुखपदं श्रीमाघणन्दी व्रती ॥

मूलसङ्घक्षितौ भाति बलात्कारगणाम्बुधिः ।
तत्त्वरत्नसमूहं वा शोभन्तेऽमी मुनीश्वराः ॥
येनाशेषपदार्थसार्थकथनं जागद्यते सन्ततं
येनातङ्ककलङ्कपङ्कमनिशं दोधूयते भूयसा ।
येन श्रीजिनराजराजितयशो जेगीयते साद्भुतं
सोऽयं जीवतु माघणन्दियतिपरिसिद्धान्तचक्रेश्वरः ॥

* * * *

नमो नम्रजनानन्दस्यन्दिने माघणन्दिने ।
जगत्प्रसिद्धसिद्धान्तवेदिने चित्प्रमोदिने ॥
सिद्धान्तसारसर्वस्वकोशात्रासैकमूर्तये ।
नमः श्रीमाघनन्द्याख्यविश्वविख्यातकीर्तये ॥
श्रीमाघणन्दिसिद्धान्तदेशिकाय नमोऽस्तु ते ।
रत्नत्रयपवित्राय भव्याम्बुरुहभानवे ॥

**Colophon:**

पदार्थसारं सम्पूर्णम् ॥

---

R. No. **5468.**

Paper. $10\frac{1}{2} \times 9\frac{1}{2}$ inches. Foll. 60 Lines, 20 in a page. Grantha. Good.

Transcribed in 1929–30 from a MS. of M.R.Ry. Tippan Nambūdiri Nedumbazhi-mana, Vaniyankulam, Malabar district.

जातककर्मपद्धतिः, सव्याख्या.

JĀTAKAKARMAPADDHATIḤ WITH COMMENTARY.

Similar to the work described under R. No. 1087 ante.
Complete.

**Beginning:**

गुर्वात्मनावतीर्णेन शिष्येभ्यो येन दर्शितम् ।
त्रिकालविषयं ज्ञानं सुब्रह्मण्यं नमामि तम् ॥
भूयोभिर्मुनिभिः पराशरमुखैर्यज्जातकोक्तं फलं
सङ्कीर्णं बहुधाभ्यधायि तदिदं मन्देष्वकिञ्चित्करम् ।

मत्वा श्रीपतिना व्यधायि रुचिरा तत्कर्मणां पद्धतिः
तस्य स्वल्पतरां करोमि विवृतिं शिष्यैरहं प्रार्थितः ॥

इह खलु प्रबन्धादाविष्टदेवतानमस्कारवत् गुरुनमस्कारस्याप्यभिलषितप्रयोजनसम्पादनसामर्थ्यसंभवादवश्यकर्तव्यत्वादयमाचार्यो निजगुरुमेवेष्टदेवतात्वेनाभिमन्यमानस्तन्नमस्कारपूर्वकं सहेतुकं चिकीर्षितं प्रतिजानाते—

नत्वा तां गुरुदेवतां त्रिसमयज्ञानोद्गतेः कारणं
तत्पादाम्बुरुहप्रसादविकसद्बोधो बुधः श्रीपतिः ।
शिष्यप्रार्थनया विचार्य सकलान् होरागमार्थान् मुहु-
र्वक्ष्ये जातककर्मपद्धतिमहं होराविदां प्रीतये ॥

अहं यस्याविरतगुरुचरणपरिचरणपरतया स्वात्मन्युपलब्धपरिपूर्णज्ञानत्वेन परमार्थसम्पादनमेव वरदक्रतुं ? तयावशिष्यते । अतएवाह—बुध इति । विद्वान् अतएव चाखण्डितप्रसिद्ध्युपारूढस्वनामकथनं श्रीपतिरिति ।

* * * *

सकलान् होरागमार्थान् यथा दृष्टार्थवादित्वेन परमपूज्यतमयवनादिप्रणीतत्वाद्धोरा एवागमास्तदर्थान् मुहुर्विचार्य विचारपूर्वकं निर्णीतजातकर्मपद्धतिं मार्गं तदुपायमिति यावत् । एतदुक्तं भवति—जातकमिति यस्मिन् काले प्राणिनां कं शिरो जायते तदुच्यत इति कृत्वा तत्कालप्रतिबद्धलग्नचतुष्कमूर्त्यादिद्वादशभावतात्कालिकग्रहबलाबलदृष्ट्यादिनिर्णयोपायभूतस्य कर्मणो नतोन्नतप्राणाद्यानयरूपस्य या पद्धतिर्मार्गस्तां वक्ष्य इत्यनेनाभिधेयस्वरूपं प्रदर्शितम् ।

**End:**

एवं संभूयाध्यायाष्टके षट्त्रिंशदधिकं शतं वृत्तानि । तत्रैकैकवृत्तगताक्षरगणनया संहृत्य द्वात्रिंशदक्षरैरेकैकग्रन्थकल्पनया ग्रन्थानामेकोनं शतद्वयं सम्पन्नमित्यनेन ग्रन्थस्य परिमित्या तद्बाहुल्यकृतो दोषोऽपि परिहृत इति श्रोतॄणां प्रवृत्त्यर्थमेवैतदिति परकीयश्लोकप्रक्षेपनिरासार्थमिदमिति सर्वं समञ्जसमेवेति ।

श्रीपरकोडाविदुषस्साहाय्यं प्रतिपद्य यः ।
कर्मणां पद्धतेर्व्याख्यां व्यधाज्जातकपद्धतेः ॥

**Colophon :**

इति जातकपद्धतिव्याख्या संपूर्णा ॥

---

R. No. **5469.**

Paper. $10\frac{1}{2} \times 9\frac{1}{2}$ inches Foll. 32 Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1929-30 from a Library MS. described under R. No. 575 ante.

काव्यार्थचूडामणिः.

KĀVYĀRTHACŪḌĀMAṆIḤ.

Foll. 1*a*—31*a*. Foll. 31*b* and 32 are left blank.

Same work as that described under R. No. 575 ante.

Contains up to Arthāntaranyāsa.

---

R. No. **5470.**

Palm-leaf. $16\frac{1}{2} \times 1$ inches. Foll. 14. Lines, 6 in a page. Grantha. Slightly injured.

Presented in 1929-30 by M.R.Ry. Sundaravaradācāryār, M.A., L.T., Madras.

महाभाष्यम्.

MAHĀBHĀṢYAM.

Same work as that described under No. 1285 of the D.C.S. MSS., Vol. III. By Patañjali.

Breaks off in the eighth Āhnika of the first Pada of the first Adhyāya.

---

R. No. **5471.**

Palm-leaf. $13\frac{3}{4} \times 1$ inches. Foll. 19. Lines 7 in a page. Grantha. Injured.

Presented in 1929-30 by M.R.Ry. Sundaravaradācāryār, M.A., L.T., Madras.

(*a*) रामायणसारसंग्रहः.

RĀMĀYAṆASĀRASAṄGRAHAḤ.

Foll. 1*a*—16*b*.

Same work as that described under No. 1901 of the D.C.S. MSS., Vol. IV, Part I. By Vēṅkaṭācārya.

Complete.

---

(b) रामचन्द्रदिनचर्यावैभवम्

RĀMACANDRADINACARYĀVAIBHAVAM.

Foll. 46b—49b.

Same work as that described under R. No. 3195 ante.

Complete.

---

R. No. **5472.**

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 44. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1929-30 from a MS. of M.R.Ry. Brahmadatta Nambūdirippāḍ, Kūḍalūr-mana, Tritala, Malabar district.

(a) दुष्करमाला, विशदाव्याख्यासहिता.

DUṢKARAMĀLĀ WITH COMMENTARY VIŚADĀ.

A work illustrating certain figures of speech in Śabdālaṅkāra and written in praise of God Viṣṇu. The work is followed by a commentary called Viśadā

By Durgaya alias Siṁhasvāmin, son of Bhaṭṭavāsudēva.

Contains the following Padās :—

१. प्रकीर्णपद्म्

२, प्रतिरूपकपद्म्.

३. प्रहेलिकाप्रश्नोत्तरपद्म्

४. यमकपद्म्.

५. नियतस्वरस्थानपद्म्.

६. प्रस्तारपद्म्.

**Beginning:**

लक्ष्मीशं ज्ञानदं विष्णुं प्रणम्यास्य प्रसादतः ।

व्याख्या दुष्करमालाया विशदाख्या वितन्यते ॥

अत्र षट्पदात्मिकायां दुष्करमालायां प्रकीर्णपदं प्रथमं, प्रतिरूपकं द्वितीया(यं), प्रहेलिकाप्रश्नोत्तरपदं तृतीयं यमकपदं चतुर्थं, नियतस्वरस्थानं वर्णपदं पञ्चमं, प्रस्तारपदं षष्ठम् । एतेषु प्रकीर्णकपदं व्याख्यायते—

व्युत्पत्त्यर्थं च बालानां विनोदार्थं विपश्चिताम् ।

विद्या दुष्करमालाख्या विष्णुस्तुत्या वितन्यते ॥

अनेनारिप्सितप्रबन्धस्य विषयप्रयोजने मते ।

वेदैर्वैद्य सुरैः पूज्य कृष्ण विष्णो श्रियः पते ।
त्वां नमामि सदा भक्त्या रक्ष मां जगतां गुरो ॥

असमस्तपदः । अर्थः प्रसिद्धः ।

विष्वक्सेन विशालाक्ष विश्वात्मन् विश्वसंभव ।
अनन्यमसमस्तसन्तानमभिरक्ष्यमधोक्षज ॥

समस्तपदः । प्रसिद्धोऽर्थः ।

* * * *

कस्त्वं शङ्खी कुबेरः किं न हरिर्ननु सर्वभुक् ।
न भूधरो भुजङ्गोऽसीत्येवं गोप्या जितः कलिः ॥

वक्रोक्तिः—

अत्र काचिदतिविदग्धचतुरा गोपाङ्गना स्वगेहमागतं गोकुलचूडामणिं हरिं महान्धकारे ज्ञात्वैवाजानतीव विनोदार्थं पृच्छति -कस्त्वमिति । शङ्खीत्युत्तरमुक्तम् । पुनरपि सा तदभिप्रायमजानतीव शङ्खशब्दं शङ्खनिधौ योजयित्वा तद्वतो वैश्रवणस्य कुत्सितशरीरत्वादोषोऽस्तीति तस्मिन्नारोप्याह-- कुबेरः किमिति ।

**End**.

अथवा भामाय अय इष्टप्रदैव मामशुभाभासभाविमुक्षणस्त्वासमाश्रितसंरक्षणधन आनतं प्रणतं मामवतु दशा दष्टचा तारक संसारतारक इयं परा श्रेष्ठा मामाभावन् प्रभैव अहं त्वदीयचरणकमलयुगलध्यानान्निष्कल्मषो भूत्वा त्वां वन्दे । त्वं च मम शरणं भव सद्भावा रक्षणस्वापरा तव प्रभैवावबोध्या भद्रशोभापि मायाभास यस अवगतं मां दशा अवात्वित्यर्थः।

**Colophon :**

इति दुष्करमालायां प्रस्तारपदं षष्ठं समाप्तम् ।

---

(*b*) पुष्पनारायणस्तुतिः.

PUṢPANĀRĀYAṆASTUTIḤ.

Foll. 12*b*—43*a*. Foll. 43*b*—44 are left blank.

Written in praise of Puṣpanārāyaṇa a deity invoked in a mantra to be used in cure of poison.

Incomplete.

**Beginning:**

लक्ष्मीरात्मप्रभावप्रकृतिरनुभवो देशिको मन्त्रवीर्य-
स्वातन्त्र्यं देवताज्ञाविधिरमृतमृतं सामरस्यस्वशक्तिम् ।
ऐश्वर्यं पुष्पनारायणपरमशिवब्रह्मशर्मस्फुरत्ता-
पर्यायैरेभिरीड्यामहमिति विषयिद्राविणीं नौमि विद्याम् ॥
विद्यां वैदेशिकानां विपुलविषतमःपातिनामर्कलक्ष्मीं
विद्युन्मालामहीनामभिलषितफलप्राप्तिमन्दारवल्लीम् ।
उद्यत्प्रद्योतनाभामुडुपतिनिवहस्पर्द्धिशैत्योदयाढ्यां
वन्दे विद्योत्तमानां मम हृदि विषविद्राविणीं देवतां नाम् ॥

**End:**

राजद्वारीननासां निजगलाविलसत्पुष्पनारायणेशां
मध्ये माहेन्द्रगेहं गगनमयतनुं पञ्चवर्णां सुपर्णाम् ।
कृत्ताहीन्द्राग्रतुण्डक्षितिजलहुतभुग्वायुताक्ष्याभिभावी
वन्देऽहं वैनतेयाकृतिमिह विषविद्राविणीमात्मलक्ष्मीम् ॥
ऐन्द्रे मां मण्डलेऽन्तर्नवपुरसुभगे दिग्विदिङ्मध्यभेदा-
दासीनः शङ्खचक्रामृतभुजगगदाखड्गलोकोशवादा ।
बिभ्रद्दोर्भिः सुपर्णः कनकहिमजवानीलभाजानुनाभी-
तष्टोर्ध्वाङ्गोन्तवर्तिस्समवतु भुजगालङ्कृतश्यामनासः ॥

---

R. No. **5473**.

Paper. $10\frac{5}{8} \times 9\frac{3}{4}$ inches. Foll. 32. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1929-30 from a MS. of M.R.Ry. Nīlakanṭhan Nambūdiri, Kaniyūr-mana, Ottapalam, Malabar district.

(*a*) अञ्जलिमूलक्षेत्रमाहात्म्यम्.

ANJALIMŪLAKṢETRAMĀHĀTMYAM.

Foll. 1*a*—26*a*. Fol. 26*b* is left blank.

A work describing the greatness of Añjalimūlakṣētra dedicated to the worship of God Subrahmanya, taken from Brahmāṇḍapurāṇa.

Contains the Adhyāyas 55 to 90 complete.

**Beginning:**

सूत उवाच--

इति तस्य वचः श्रुत्वा षण्मुखस्य महात्मनः ।
देवर्षिः परिपप्रच्छ भूयोऽपि परमादरम् ॥
उक्तं हि भवता जन्म लोकविस्मयकारकम् ।
सुब्रह्मण्याभिधक्षेत्रमाहात्म्यं च त्वयानघ ॥
शङ्करस्य प्रियः पुत्रः सर्वव्यापी भवानपि ।
भूतले यत्र यत्रास्ति सान्निध्यं परमं तव ॥
पापघ्नेषु च तीर्थेषु प्रतिमास्वपि च प्रभो ।
येन येन भवान् भूमौ यत्र यत्र प्रतिष्ठितः ॥
तत्क्षेत्राणां च नामानि तेषां माहात्म्यमेव च ।
तत्सर्वं वद मे देव श्रद्दधानाय विस्तरात् ॥

सूतः—

इत्थं निशम्य वचनं स्वकथानुरक्तं
श्रीनारदस्य भगवानथ कार्त्तिकेयः ।
तं मानयन् सकलभागवतप्रधानं
प्रीत्या स्मयन् मृदु जगाद मनोऽभिरामम् ॥

स्कन्द उवाच--

प्रश्नोऽयं तव देवर्षे सर्वलोकोपकारकम् ।
त्वं हि लोकोपकाराय नित्यं चरसि भूतले ॥

* * * *

लोकेषु तत्र तत्रापि प्रतिमासु महामुने ।
ममास्ति नित्यसान्निध्यं तीर्थेषु च बहुष्वपि ॥
तत्सर्वं विस्तराद्वक्तुं शेषेणापि न शक्यते ।
मदावासेषु सर्वेषु यन्मुख्यं तस्य नाम च ।
येन तन्निर्मितं चेति माहात्म्यं च वदामि ते ।
नीलाद्रिरे द्विजाः केचित् पुरासन् वेदवित्तमाः ॥
तेष्वेको गुणसम्पन्नः सत्यवागनसूयकः ।

* * * *

एवं किञ्च गते काले स विप्रः शीलवानपि ।
प्राक्तनेनैव पापेन गदैर्बहुभिरर्दितः ॥
चिन्तयित्वा मुहुर्धीमान् ज्ञात्वा प्राग्भवजं द्विजः ।
समाश्वास्य सुतान् वाग्भिः कान्तया सह धीरधीः ॥
सुब्रह्मण्यं महत्क्षेत्रं मम मूलस्थलं गतः ।
तत्र गत्वावसत्सौख्यमर्चयन्मां समाहितः ॥

* * * *

अञ्जलीमूलवासेन मत्क्षेत्रं प्रथितं भुवि ।
अञ्जलीमूलमित्येवं सर्वक्षेत्रेष्वनुत्तमम् ॥
ततो नीला महाभागा भक्त्या मामनुवर्तते ।
तस्यां स्नात्वार्चयित्वा मां नलो दुःखैर्वियुक्तवान् ॥

* * * *

**Colophon:**

इति ब्रह्मपुराणे उपरिखण्डे गुहनारदसंवादे अञ्जलिमूलक्षेत्रमाहात्म्यं नाम पञ्चाशीतितमोऽध्यायः ।

**End:**

शिवरात्र्यां प्रदोषे च सोमवारे च सुव्रत ।
मत्क्षेत्रस्थो वदेदेतन्माहात्म्यं सर्वसिद्धये ॥
वदन्त्येव पुराणेषु सर्वेष्वपि तपोधन ।
न भस्मनः परं श्रेय इति वेदेषु चानघ ॥
तस्मात् सदापि वैधात्र भस्म धारय मुक्तये ।
यस्त्वेतद्भक्तमाहात्म्यं संवादं चापि नौ मुने ॥
शृणुयाद्वा पठेद्वापि स सद्यो मुच्यते ध्रुवम् ।

स्कन्दः—

इत्याहतोक्तः परमेश्वरेण सनत्कुमारो मुनिराप्तकामः ।
भूयोऽपि भूयोऽपि हरं प्रणम्य प्रसन्नचित्तो मुनिभिर्जगाम ॥

**Colophon:**

इति ब्रह्माण्डपुराणे उपरिखण्डे गुहनारदसंवादे भस्ममाहात्म्यं नाम नवतितमोऽध्यायः ।

(b) चन्द्रोपाख्यानम्.

CANDRŌPĀKHYĀNAM.

Foll. 27a—32a. Fol. 32b is left blank.

Deals with the story of the birth of Moon. Taken from Sūtapurāṇa.

Complete.

**Beginning:**

राजोवाच—

अत्रिनेत्रसमुद्भूतो भगवान् मृगलाञ्छनः ।
इति त्वया पुरा प्रोक्तं दत्तात्रेयकथान्तरे ॥
स कथं क्षीरपाथोधेर्जात इत्यद्य कीर्तितम् ।
इति मे संशयो जातस्तद्भवाञ्छेत्तुमर्हति ॥

ऋषिः—

जातमात्रे पुरा चन्द्रे नेत्रादत्रेर्नरेश्वर ।
अनाधारात् पपातोर्व्यां दिग्भिस्सन्धारितोऽपि सन् ॥
तदा तं रथमारोप्य ययौ ब्रह्मा सुरालयम् ।
पतमानस्य सोमस्य तनोरमृतबिन्दवः ॥
अत्र भूमौ निपतितास्ततस्संजज्ञिरे लताः ।
ता वै सोमलताः प्रोक्तास्तासु नित्यं निशाकरः ॥
निवसत्येव राजेन्द्र शमीष्विव हुताशनः ।
अथ नारायणादेशान्मथ्यमाने पयोनिधौ ॥
सर्वौषधीस्समानीय चिक्षिपुर्देवदानवाः ।
तदा सोमलताश्चापि निदधुः क्षीरसागरे ॥
मथ्यमानादतस्तस्मादुदतिष्ठत् कलानिधिः ।
दृष्ट्वा तं विस्मितः शम्भुः शेखरत्वे प्रकल्पयन् ॥
चन्द्रचूड इति ख्यातिं गतस्तस्मान्महेश्वरः ।
मानितो लोकनाथेन शम्भुना शीतदीधितिः ॥
शापत्रयोद्भवं दुःखमवमानं च शाश्वतम् ।
त्यक्त्वावसत्सुखं राजन् सर्वलोकैश्च पूजितः ॥
महत्संभावना लोके सर्वेषां च यशस्करी ॥

**End :**

अतश्चतुर्थ्यां चन्द्रस्य रश्मिं दृष्ट्वा समाहितः ।
पठेद्धात्रेयिकावाक्यं कृष्णं ध्यात्वा जगत्पतिम् ॥
एतेन मन्त्रजापेन मुच्यते दुर्यशोभयात् ।
एवं तृतीयः शापो वै चन्द्रस्यासीत्पुरा विभो ॥
इति ते सम्यगाख्यातं यन्मां त्वं परिपृच्छसि ।

**Colophon:**

इति सूतपुराणे गर्गजनमेजयसंवादे चन्द्रोपाख्यानं नाम षडशीतितमोऽध्यायः ।

---

## R. No. 5474.

Paper. 10⅜ × 10 inches Foll. 166. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1929–30 from a MS. of M.R.Ry. Brahmadatta Nambūdirippād, Kūḍalūr-mana, Tritala, Malabar district

**परिभाषेन्दुशेखरव्याख्यानम्.**

PARIBHĀṢĒNDUŚĒKHARAVYĀKHYĀNAM.

Foll. 1*a*—165*b*. Fol 166 is left blank.

Similar to the work described under No. 1473 of the D.C.S. MSS., Vol. III.

Incomplete.

**Beginning :**

विश्वेश्वरं गुरुं नत्वा ध्यात्वा च हृदि भारतीम् ।
विवृणोमि यथामेधं परिभाषेन्दुशेखरम् ॥
गुणान् गृह्णन्तु सुधियो मत्कृतौ दोषजुष्यपि ।
कठिनाश्मपरीतायां खनौ मणिगणानिव ॥
दोषान्वितोऽपि तनुते मत्प्रबन्धस्सतां मुदम् ।
सुधायुक्तिभिराश्लिष्टकलङ्कोऽपि विधुर्यथा ॥
दोषभाजमपि मत्कार्ति बुधा भूषयन्तु शिरसा हि सादरम् ।
दूषितामतनुकण्टकै रजोरूषितामपि सुकेतकीमिव ॥

प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नेन परिसमाप्त्यर्थं तच्छास्त्रमूलभूतचतुर्दशसूत्रोपदेष्टृत्वेन समुचितं साम्बशिवनत्यात्मकं मङ्गलं शिष्यशिक्षार्थं

ग्रन्थादौ निबध्नन् चिकीर्षितं प्रतिजानीते—नत्वेति । ब्रह्मेति । बृहेर्नो अच्चेति व्युत्पादितोऽयम् । कुरुत इति । यशसः शिष्याणामनायासज्ञान-जन्यसुकृतस्य चात्मगामित्वेनात्मनेपदम् । परिभाषेन्दुशेखरमिति । ग्रन्थपक्षे इन्दव इव परिभाषा. परिभाषेन्दवः, ताः शेखरा यस्य । तासामेव व्याख्येयत्वेन प्राधान्यात् भूषणत्वारोपः । शिवपक्षे तु परिभाषा इवेन्दु-रिति मयूरव्यंसकादित्वात् समासः ।

* * * *

व्याख्यानत इत्यत्राद्यादित्वात्तसिः । ननु पञ्चम्यास्तसिल्; तत्र किं-सर्वनामबहुभ्य इत्यनुवृत्तेः । अन्यतराद्यर्थम्येति, अभिमतस्येति शेषः । आदिना अन्यनमस्य संग्रहः । ननु विशेषप्रतिपत्तिः केषामित्याकाङ्क्षायां शिष्याणामिति कर्तुर्गम्यमानतयोभयप्राप्तेति प्रवृत्त्या कर्मणि चेति समास-निषेधः स्यात् ।

**End :**

भाष्य त्विति । उपक्रमलोपपदेन स्थानिवत्त्वाश्रयणेन चेत्यर्थः । ननु लोपपदस्य व्यापकत्वान्नोपक्रमविरोधः । समाधानस्य लोपमात्रविषयत्वा-न्नोपसंहारविरोधोऽपीत्यत आह—किंचेति । अदोषादिति । तत्र दोषानुप-न्यासमूलकपरिभाषाङ्गीकारापत्तिरूपदोषाभाव इत्यर्थ इति सर्वं शिवम् ॥

---

R. No. **5475**.

Paper. $10\frac{3}{8} \times 9\frac{1}{2}$ inches. Foll. 121. Lines, 20 in a page. Grantha Good.

Transcribed in 1929-30 from a MS. brought by Mr. Ayana Nayinar, Madras.

यत्याचारादिधर्मः, सव्याख्यः.

YATYĀCĀRĀDIDHARMAḤ WITH COMMENTARY.

Deals with some of the duties and religious observances of a Jaina ascetic and with certain other religious matters relating to Jainism.

By Padmanandin.

Contains the following subjects :—

१. गृहधर्मप्रकरणम्.
२. रत्नत्रयस्वरूपम्.
३. दशधर्माः.
४. धर्मोपदेशामृतम्.

५. एकाशीति
६. अनित्यपञ्चाशत्.
७ यतिभावनाष्टकम्
८. उपासकसंस्कारः.
९. श्रावकाचारः.
१०. दानपञ्चाशत्.
११. शान्तिनाथस्तोत्रम्.
१२. पूजाष्टकम्
१३. करुणाष्टकम्.
१४ देशवृतप्रकाशनम्.
१५ परमार्थविंशतिः.
१६. एकत्वभावनादशकम्,
१७. शरीराष्टकम्
१८. स्नानाष्टकम्.
१९. ब्रह्मचर्याष्टकम्.
२०. निःशेषसुप्रभाताष्टकम्.

Beginning :

कायोत्सर्गायताङ्गो जयति जिनपतिर्नाभिसूनुर्महात्मा
मध्याह्ने यस्य भास्वानुपरि परिगतो राजति स्मोग्रमूर्तिः ।
चक्रं कर्मेन्धनानामतिबहु दहतो दूरमौदास्यवात-
स्फूर्यत्सध्यानवह्नेरिव रुचिरतरः प्रोद्गतो विस्फुलिङ्गः ॥

(व्या) —

सः जिनः जयति। कथम्भूतो जिनः नाभिसूनुः नाभिपुत्रः। कथम्भूतः महात्मा महांश्चासावात्मा महात्मा । पुनः कथम्भूतः कायोत्सर्गायताङ्गः कायोत्सर्गेणायतं प्रसारितमङ्गं यस्य सः कायोत्सर्गायताङ्गः। मध्याह्ने वासरमध्यकाले यस्य जिनपतेरुपरि परिगतः प्राप्तः भास्वान् सूर्यो राजति स्म शुशुभे ।

* * * *

धर्मो जीवदया गृहस्थशमिनोर्भेदाद् द्विधा च त्रयं
रत्नानां परमं तथा दशविधोत्कृष्टक्षमादिस्ततः ।
मोहोद्भूतविकल्पजालरहिता वागङ्गसङ्गोज्झिता
शुद्धानन्दमयात्मनः परिणतिर्धर्माख्यया गीयते ॥

जीवदया धर्मः गृहस्थशमिनोः द्वयोर्भेदात् द्विधा धर्मः कथ्यते । रत्नानां त्रयं त्रिविधं धर्मः । दर्शनज्ञानचारित्राणि धर्मः । तथा दशविधो धर्मः उत्तमक्षमादिः। ततः पश्चादात्मनः परिणतिः धर्माख्यया धर्मनाम्ना कृत्वा आत्मनः परिणतिः कथ्यते । किं लक्षणा परिणति । मोहोद्भूतविकल्पजाल-

रहिता मोहात्मविकल्पजालरहिता मोहात्मा । पुनः किंलक्षणा परिणतिः वागङ्गसङ्गोज्झिता वचनकायसङ्गरहिता । पुनः किंलक्षणा शुद्धानन्दमया ।

**Colophon:**

* * * *

इति यत्याचारः ।

**End:**

भव्याम्भोरुहनन्दिकेवलरविः प्राप्नोति यत्रोदयं
दुष्कर्मोदयनिद्रया परिहृतं जागर्ति सर्वं जगत् ।
नित्यं यैः परिपठ्यते जिनपतेरेतत्प्रभाताष्टकं
तेषामाशु विनाशमेति दुरितं धर्मस्सुखं वर्धते ॥

यत्र सुप्रभाते भव्याम्भोरुहनन्दिकेवलरविः उदयं प्राप्नोति यत्र यस्मिन् प्रभाते उदिते सति सर्वं जगत् दुष्कर्मोदयनिद्रया परिहृतं त्यक्तं जागर्ति । एतत् जिनपतेः प्रभाताष्टकं यैः भव्यैः नित्यं सदैव परिपठ्यते, तेषां भव्यानां दुरितं पापम् आशु शीघ्रं विनाशमेति विलयं गच्छति धर्मः सुखं वर्धते ।

**Colophon:**

इति सुप्रभाताष्टकं संपूर्णम् ।

---

R. No. **5476.**

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 126, Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1929–30 from a MS. brought by Mr. V. Nārāyanasāmi Śāstri, Mylapore.

मीमांसानयविवेकः.

MĪMĀṀSĀNAYAVIVĒKAḤ.

Same work as that described under No. 4457 of the D.C S. MSS., Vol. IX.

By Bhavanāthamiśra.

Contains the 3rd Adhyāya complete.

**Beginning:**

पञ्चिकाद्वयतन्त्रार्थसंमोहविनिवृत्तये ।
उद्ग्राहिणी भवेनैषा वक्ष्यते शेषलक्षणा ॥

अथातः शेषलक्षणम् ।

अत्र च भाष्यं नानाकर्मलक्षणं वृत्तमिति शास्त्रभेदलक्षणं वृत्तमित्यर्थः। क्रियाकारकाद्यन्वितानुबन्धभूतकर्मभेदकथनमुखेन हि शास्त्रभेद एवोक्तः । क्रियाकारकाद्यन्विताभेदांशेन साध्यभेदाधीनः अनुबन्धभूतकर्मांशेनानुबन्धभेदाधीनः । एवं द्विविधशास्त्रभेदहेतुकथनमुखेन फलभूतशास्त्र . . . . . बाधोत्पादनं कृतं । धूमकथनमुखेनवाग्निबोधोत्पादनमिति । ननु लक्षणावृत्त्या शास्त्रभेद उक्तः । हेतुयुक्तस्वरूपस्यैव शेषत्वहेतुत्वात् । तन्मुखे . . . . नं युक्तमिति स्फोरयिष्यते ।

*   *   *   *

**Colophon:**

इति श्रीभवनाथमिश्रविरचिते नयविवेके तृतीयस्याध्यायस्य प्रथमः पादः ।

**End:**

लक्ष्यां सवनीयपदे उद्देशके साहचर्यात् पुरोडाशपदे सर्वलक्षणा दृष्टा ननु सवनीयपदस्यासवनीयेषु प्रवृत्तिः । साहित्याच्च शक्या पुरोडाशेन धानादिलक्षणा । न ह्यसवनीयपुरोडाशस्य धानादिसम्बन्ध इति न सवनीयपदं सवनीयपुरोडाशलक्षणार्हो(र्हम्)मिति न राद्धान्त इति गुरूक्तैव विधा ।

**Colophon:**

इति श्रीमहामहोपाध्यायभवनाथमिश्रविरचित मीमांसानयविवेके तृतीयस्याध्यायस्याष्टमः पदः समाप्तः ।

---

R. No 5477.

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 144. Lines, 20 in a page Dēvanāgarī. Good.

Transcribed in 1929-30 from a MS. brought by Mr. V. Nārāyaṇasāmi Śāstri, Mylāpore.

छन्दसिकाभाष्यम्.
CHANDAŚIKHĀBHĀṢYAM.

A commentary on the hymns of Sāmavēda. By Mādhava, son of Nārāyaṇa.

Contains from the beginning to the end of the 6th Prapāṭhaka.

**Beginning:**

रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे ।
अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः ॥

षट्त्रिंशत्प्रकारा मन्त्राः प्रैषाः करणाः क्रियमाणानुवादिनः स्तोत्रशस्त्रगता जपानुवचनगताश्च एते पञ्च प्रकारा ऋग्व्याख्यायां भवन्ति । अन्ये सामव्याख्यायामुच्यन्ते ।

प्रस्तावनश्चोद्गीथः प्रतिहारोपद्रवस्तथा ।
निधनं पञ्चमश्चाहुः हिङ्कारं प्रणवमेव च ॥
आशास्ति स्तुतिसंख्यानं प्रलापः परिदेवनम् ।
प्रैषमन्वेषणं चैव सृष्टिराख्यानमेव च ॥
सप्तधा गेयमेकेषामन्ये (तत्)षड्विधा विदुः ।
पञ्चविधं तु सर्वेषामध्वरार्थं प्रचक्षते ॥

अन्येऽपि स्तोत्रप्रकारा अ... ...व लोको हा उकारो वायुर्हा इकारश्चन्द्रमा अथकारः आत्मेहाकारः अग्निरीकारः आदित्य ऊकारः निहव एकारः विश्वेदेवा आ हो इकारः प्रजापतिर्हिङ्कारः प्राणः स्वरोऽन्नं या वाग्विराट् अनिरुक्तस्त्रयोदशस्तोभः सञ्चरोहुङ्कारः एते षट्त्रिंशत्प्रकाराः सामव्याख्यायां भवन्ति । साम्नां च प्राधान्यमस्मिन् सामवेदे । यतः स्तोत्राणि तानि तान्येव मन्त्राः छन्दोगानाम्

* * * *

छन्दसिकोत्तरहस्याः पञ्चाग्निना माधवेन श्रीनारायणसूनुना सवितुः परां भक्तिमालम्ब्य तत्समादाद्धाप्यं कृतम् । यदत्र न्यूनं यदतिरिक्तं व्याहतं पुनरुक्तं भिन्नसंस्थानं युक्तिहीनं च तत्सर्वं भूमिदेव्यैः(वैः) सज्जनैः भूत्वा क्षन्तव्यमिति एष एव सम्बन्धो व्याख्यानेऽपि ।

अग्ने भरद्वाजस्यार्षम् । हे अग्ने आयाहि आगच्छकिमर्थं पुनरागच्छामि उच्यते वीतये भक्षणायेत्यर्थः कस्य सामर्थ्यात् हविषामेत्य च गृह्णानः स्तूयमानः हव्यदातये हविर्दानार्थमित्यर्थः ।

* * * *

**Colophon :**

प्रथमस्य प्रथमा दशत्या ।

**End :**

उत्सृत्याः —आदित्यरश्मयः अनड्वाहा वा अन्तरश्मनि अश्मनोप्यन्तः निःगा अकृन्तविनरां गावः अकृन्तत् अकर्तयम् । अश्मानं भिन्दय भिनिवा । ओजसा स्वेन बलेन अभिव्रज गोष्ठ तं निशे वितनुते विस्तारयन्ति । गव्यं गवां भवम् । तमश्व्यम् अश्वानां भवम् । वर्मि इव वर्म सन्नहनं तद्यस्यास्ति स वर्मी भविता तस्य सम्बाधनम् । हे धृष्णो धारयितः आरुजा रुजभङ्गे भक्ता धनं गव्यं अश्व्यं च मम प्रयच्छेत्याख्यातार्थः ।

**Colophon :**

इति षष्ठे नवम्या दशत्या ।

इति छन्दसिकाविवरणं माधवाचार्यकृतं समाप्तम् ।

इति षष्ठप्रपाठकानां समाप्तोऽयम् ।

माधवाचार्यकृतं छन्दसिकाभाष्यं समाप्तम ॥

---

## R. No. 5478.

Paper. $16\frac{5}{8} \times 8\frac{1}{2}$ inches. Foll. 10. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1920 30 from a MS. of M R Ry. Brahmadatta Nambūdirippad, Ūḍa'ūr-mana, Tritala, Malabar district

**सिद्धान्तचन्द्रिकाव्याख्या.**

**SIDDHĀNTACANDRIKĀVYĀKHYA**

Same work as that described under No 1332 of the D.C S MSS., Vol. VIII. By Gaṅgadharasudhī.

Contains from the Buddhilakṣaṇa to the end of Satpratipakṣa in Anumana.

**Beginning :**

या कण्ठनालकवलीकृतकालकूट
च्छायेव विस्फुरति वक्षसि चन्द्रमौलेः ।
सा मे समस्तदुरितानि कटाक्षमाला
तुच्छीकरोतु तुहिनाचलकन्यकायाः ॥

बुद्धिनिरूपणम्—

इदानीं क्रमप्राप्तं बुद्धिं निरूपयति—अर्थेति । अत्र प्रकाश इत्येतावदेव लक्षणम् । अर्थपदं तु स्वरूपकथनम् । प्रकाश इत्यस्य च प्रकाशत्वजातिमानित्यर्थः । तेन तादृशजातिमत्त्वं बुद्धेर्लक्षणमिति भावः । सा च जातिर्जानामीत्यनुगतप्रत्यक्षसिद्धेति भावः ।

* * * *

**Colophon:**

इति प्रत्यक्षनिरूपणम् ।

क्रमप्राप्तामनुमितिं निरूपयितुमुपक्रमते—अथेति । तल्लक्षणमाह—अनुमितित्वेति । अनुमितित्वजातौ प्रमाणमाह—अनुमितित्वं चेति । केचित्तु अनुमितित्वेन परामर्शत्वेन कार्यकारणभावात् परामर्शजन्यतावच्छेदकतया तत्सिद्धिः ।

**End:**

तच्च धूमादेरपि नानुपपन्नमिति निरुक्तवाच्यतावच्छेदकत्वस्य नीलधूमत्वादावसंभवेन तदवच्छिन्ने व्याप्यत्वासिद्धिरुपपद्यत एवेत्यादिकमभिप्रेत्याह—सङ्क्षेप इति । सत्प्रतिपक्षं लक्षयति—मन्निति । प्रतिपक्षविशिष्टः सत्प्रतिपक्ष इत्यर्थः । तद्वैशिष्ट्यं च स्थापनायास्तद्विषयकज्ञान.

---

R. No. **5479.**

Paper. × 10½ 9½ inches. Foll. 75 Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1029 30 from a MS. of M.R.Ry. Dāmōdaran Nambūdiri, Puramanathu-mana, Shoranur, Malabar district.

कामुकरसायनम्.

KĀMUKARASĀYANAM.

A collection of erotic stanzas gleaned from various sources. Complete.

**Beginning:**

सौवर्णचक्रजघनस्थलनृत्तधूत
वक्षोजघट्टनविपिष्टघनाङ्गरागम् ।
माद्यत्पिकारवमनोहरकण्ठनादं
भूयान्मुदे मृगदृशां पुरुषायितं वः ॥

आरूढो मलयानिलं मधुसखः पूर्णेन्दुनोदञ्चित-
च्छत्रः कोकिलकाहलीकलरवैरुद्घोषिताशामुखः ।
कोदण्डे मधुरे मरन्दभरितं बाणं रुषा पुङ्खयन्
लक्षीकृत्य मनो मदीयमधुना प्राप्नोति मीनध्वजः ॥
लाक्षाविषदिग्धाभ्यां हृदि मन्येऽहं पदाब्जबाणाभ्याम् ।
विद्धः स्मरेण शेते मरतकमणिरेष कीर्णकरः ॥

**End :**

शोभासर्वस्वमेषां प्रथममपहृत यत्त्वया लोचनाभ्यां
माध्वीमाधुर्यसारद्रवकलवचसा मार्दवं यत्प्रतीकैः ।
स्थानभ्रंशो महीयानपि च विरचितस्त्वन्मुखस्पर्द्धितां तत्
पद्मानां बन्धनार्थं विरम वरतनो पिष्टपेषेण किं स्यात् ॥

तस्सि जणंमि अणबन्धिअराअबन्धो
एषा अणङ्गदहणे सलहायमाणा ।
एमेअ कालहरणं जइ वा सहेइ
हा हद्धि कालहरणं च दिढं सहेइ ॥
तस्मिन् जने अनुबन्धितरागबन्धा
एषा अनङ्गदहने शलभायमाना ।
. . कालहरणं यदि वा सहते
हा हा धिक् कालहरणं च दृढं सहते ॥

The scribe adds :—

श्वेतग्रामाटवीसंश्रितजनकसुताकान्तपादारविन्द-
प्राद्यन्माध्वीरसास्वादनमधुपयुवा विप्रबृन्दस्य नन्ता ।
काव्याम्भःसिकल्लोलो गुरुजनचरणाम्भोजयुग्मप्रणन्ता
श्रीकण्ठः कश्चिदेतत् सपदि लिखितवान् पुस्तकं देवदासः ॥

---

R No. **5480.**

Paper. $10\frac{1}{2} \times 9\frac{1}{2}$ inches. Foll. 248. Lines, 20 in a page. Dēvanāgarī Good.

Transcribed in 1929-30 from a MS. of M.R.Ry. Cakravarti Nāyanār of Ālagrāmam, Tindivanam taluk, South Arcot district.

मूलाचारः, वृत्तिसहितः.

MŪLĀCĀRAḤ WITH VṚTTI.

Foll. 1a—248a. Fol. 248b is left blank.

A work on the traditional customs and religious duties of the Jainas.

The text is by Kuṇḍakundācārya and the commentary is by Vasunandi.

Comlpete.

**Beginning:**

श्रीमच्छुद्धेद्धबोधं सकलगुणनिधिं निष्ठिताशेषकार्यं
वक्तारं सत्प्रवृत्तेर्निहतमतिमलं शक्रसंवन्दिताङ्घ्रिम् ।
भर्तारं मुक्तिवध्वा विमलसुखगतेः कारितायास्समन्ता-
दाचारस्यात्तनीतेः परमजिनकृतेर्नौम्यहं वृत्तिहेतोः ॥

(व्या) —

श्रुतस्कन्धाधारभूतमष्टादशपदसहस्रप्रमाणं मूलगुणप्रत्याख्यानसंस्तरस्तवाराधनासमयाचारपञ्चारपिण्डशुद्धिपीडावश्यकद्वादशानुप्रेक्षानगारभावनासमयसारशीलगुणप्रस्तारपर्याप्त्याद्यधिकारनिबद्धमहार्थगम्भीरं लक्षणसिद्धपदवाक्यवर्णोपचितं घातिकर्मक्षयोत्पन्नकेवलज्ञानप्रबुद्धाशेषगुणपर्यायखचितषड्द्रव्यनवपदार्थजिनवरोपदिष्टं द्वादशविधतपोऽनुष्ठानोत्पन्नानेकप्रकारसमवनासमयसारशीलगुणार्घे समन्वितगणधरदेवरचितं मूलगुणोत्तरस्वरूपं कल्पोपायसाधनसहायफलनिरूपणप्रवणमाचाराङ्गमाचार्यपारम्पर्यप्रवर्तमानमल्पबलमेधायुःशिष्यनिमित्तं द्वादशाधिकारैरुपसंहर्तुकामः स्वस्य श्रोतॄणां च प्रारब्धकार्यप्रत्यूहनिराकरणक्षमं शुभपरिणामं विदधत् श्रीकुन्दकुन्दाचार्यः प्रथमतरं तावत् मूलगुणाधिकारप्रतिपादनार्थं मङ्गलपूर्विकां प्रतिज्ञां विधत्ते—मूलगुणेष्वित्यादि—

(मू)—

मूलगुणे सुविसुद्धे वन्दित्ता सव्वसंजदे सिरसा ।
इह परलोकहिदत्थे मूलगुणे कित्तइस्सामि ॥

मङ्गलनिमित्तपरिमाणनामकर्तॄन् धात्वादिभिः प्रयोजनाभिधेयसम्बन्धांश्च व्याख्याय पश्चादर्थः कथ्यते इति । मूलगुणेषु मूलानि च तानि गुणाश्च ते मूलगुणाः । मूलगुणशब्दः अनेकार्थे यद्यपि प्रवर्तते, तथाप्याचारेण विशेषे वर्तमानः परिगृह्यते मूलगुणाः प्रधानानुष्ठानानि । उत्तरगुणानि

उत्तरगुणाधारभूतानि तेषु मूलगुणेषु विषयभूतेषु कारणभूतेषु वा सत्सु ये विशुद्धा निर्मलाः सञ्जातास्तान् मूलगुणेषु विशुद्धान् वंदित्ता वन्दित्वा मनोवाक्कायक्रियाभिः प्रणम्य, सव्वसंजदे अयं सर्वशब्दो निरवशेषेऽर्थे वाचकः परिगृहीतो बह्वनुग्रहकारित्वात् । तेन प्रमत्तसंयताद्ययोगिपर्यन्ता भूतपूर्वगत्या सिद्धाः परिगृह्यन्ते । संयताः पापक्रियाभ्यो निवृत्ताः । सर्वे च ते संयताश्च सर्वसंयताः तान् सर्वसंयतान् । प्रमत्ता अप्रमत्ता अपूर्वकरणानिवृत्तिकरणसूक्ष्मसाम्परायोपशान्तकषायक्षीणकषायसयोगिकेवल्ययोगिकेवलिसंयतान्, सप्ताद्यष्टपर्यन्ता षण्णवमध्यसङ्ख्यासमेतान् । सिद्धांश्चानन्तान् सिरसा मस्तकेन मूर्ध्ना इह परलोकहिदत्थे इहशब्दः प्रत्यक्षवचनः । परशब्दः उपरतेन्द्रियजन्मवचनः । लोकशब्दः स्वरादिवचनः । इह च परश्चेहपरौ तौ च तौ लोकौ च इहपरलोकौ ताभ्यां तयोर्वा हितं सुखैश्वर्यपूजासत्कारचित्तनिवृत्तिफलादिकं तदेवार्थं प्रयोजनं येषान्ते इहपरलोकहितार्थास्तानिहलोकपरलोकसुखैश्वर्यादिनिमित्तान् । इहलोके पूजां सर्वजनमान्यतां गुरुतां सर्वजनमैत्रीभावादिकं च लभते । मूलगुणानाचरन् परलोके च सुरेशं तीर्थकरत्वं चक्रवर्तिबलदेवादिकत्वं सर्वजनकान्ततादिकं च मूलगुणानाचरन् लभत इति मूलगुणे मूलगुणान् सर्वोत्तरगुणाधारतां तानाचरणविशेषान् कित्तइस्सामि कीर्तयिष्यामि व्याख्यास्यामि ।

* * * *

**Colophon:**

इत्याचारवृत्तौ वसुनन्दिविरचितायां प्रथमपरिच्छेदः ।

**End:**

(मू)—

जह मज्झ तम्हि काले विमला अणुपेक्खणा भवे जहू ।

तह सव्वलोअणाहा विमलगदी गदा पसीदन्तु ॥

यथा येन प्रकारेण मम तस्मिन्नन्त्यकाले विमलानुप्रेक्षा द्वादशानुप्रकारा भवेयुः, तथा सर्वलोकनाथाः विमलगतिं गताः प्रसीदन्तु प्रसन्ना भवन्तु । द्वादशानुप्रेक्षाभावनां मम दिशन्तु ।

**Colophon:**

इत्याचारवृत्तौ वसुनन्दिकृतायामष्टमप्रस्तावः ॥

R. No. **5451.**

Paper. 10⅝ × 9⅝ inches. Foll. 290. Lines, 20 in a page. Grantha Good.

Transcribed in 1929–30 from a MS. brought by Ayyana Nāyinār of Royapet, Madras.

Bound in two volumes.

सात्यन्धरिप्रबन्धः.

SĀTYANDHARIPRABANTHAḤ.

Describes the story of Jīvandhara alias Jīvaka son of Satyandhara. The author is Appāṇḍanātha son of Tambi Nayinar and disciple of Lakṣmīsēna and Vēṅkaṭācārya. The story mostly concurs with that described in the Jīvakacintāmaṇi a well known Tamil classical work by Tiruttakkadēvar.

Breaks off in the 17th Kāṇḍa.

Contains the following Kāṇḍas :—

१. सरस्वतीकाण्डः.
२. गोविन्दाकाण्डः.
३. गन्धर्वदत्ताकाण्डः.
४. गुणमालाकाण्डः.
५. पद्माकाण्डः.
६. क्षेमश्रीकाण्डः.
७. कनकमालाकाण्डः.
८. विमलकाण्डः.
९. सुरमञ्जरीकाण्डः.
१०. जीवन्धरबन्धसंयोगकाण्डः.
११. लक्ष्मणाकाण्डः.
१२. युगलसैन्यस्मरसंलापमेलोपकवर्णनकाण्डः.
१३. रिपुविजयस्वकीयराज्यप्राप्तिश्रीलक्ष्मणाभिधानकन्यकाविवाहकाण्डः.
१४. जीवन्धरमहाराजसाम्राज्यविभववर्णनकाण्डः.
१५. श्रीविजयासुनन्दार्यिकावैराग्यतपोलक्ष्म्याप्तिजीवन्धरमहाराजतनयोत्पत्तिव्यावर्णनकाण्डः
१६. जीवन्धरनरेश्वरसंसारवैराग्यद्वादशानुप्रेक्षाचिन्तनजिनभवनप्रवेशनजिनस्तुतिसुख्यावर्णनकाण्डः.
१७. संसारबन्दीकाण्डः.

**Beginning :**

श्रीनाभिसूनुं वन्देऽहं कलुषारिनिबर्हणम् ।
पञ्चबाणहतं नित्यं सनातनसुखप्रदम् ॥
अजितं विजितं मारं शम्भवं शङ्करं भजे ।
अभिनन्दननामानं जिनमानन्दनं सताम् ॥
सुमतिं सुमबाणारिं प्रमापणमहं भजे ।
सुमतिं दायकं धीरं भवजीवप्रतारकम् ॥

पद्मप्रभं जिनं नौमि पद्मालिङ्गितवक्षसम् ।
पद्मचिह्नं पद्मपादं पद्मरागमणिप्रभम् ॥
सुपार्श्वाख्यं जिनं स्तौमि सुपार्श्वं हरितप्रभम् ।
चन्द्रप्रभं जिनं वन्दे चन्द्राङ्कं चन्द्रविग्रहम् ॥
पुष्पदन्तं पुष्पदं तं पुष्पदन्तयशोव्रजम् ।
पुष्पदन्तनतं स्तौमि कुन्दपुष्पसमच्छविम् ॥
शीतलं शीतलस्वान्तं तीर्थनाथं वृषार्चितम् ।
श्रेयांसं श्रेयसां नाथं श्रेयः श्रीनायकं स्तुवे ॥
वासुपूज्यं जिनं भक्त्या वासवानतसुक्रमम् ।
वसुपूज्यं बन्धुजीवमयूखाङ्गं स्तवीम्यहम् ॥
विमलाख्यं जिनं ध्याये विमलं तीर्थनायकम् ।
अनन्तं विनतानन्तमनन्तसुखदायकम् ॥
धर्मनाथं धर्मबुद्धिं त्यागिनं धर्मदेशिकम् ।
भव्यानां भवमुक्तानां नमामि व्रजिनाहतम् ॥
शान्तं दान्तं शान्तिनाथं कर्मशान्तिकरं नुमः ।
किन्नरामरवन्द्यं तं करोमि नुतिमन्वहम् ॥
कुन्दुं कुन्दादिजीवानां कन्दं कुवलयेक्षणम् ।
निर्वाणसुखदं वन्दे निर्जरासुरवन्दितम् ॥
अरनाथमरं ध्यायेऽप्यक्षरश्रीपतिं प्रभुम् ।
मल्लिं जिनपतिं नौमि मल्लिकाबाणनाशकम् ॥
सुव्रतं सुव्रतं भव्यं वितीर्णं भव्यदेहिनाम् ।
नमितासुरगीर्वाणं नमिनाथं भजाम्यहम् ॥
नेमितीर्थकरं स्तौमि नित्यानन्दकरं सदा ।
पार्श्वतीर्थकरं देवं फणीश्वरसमर्चितम् ॥
श्रीवर्धमानतीर्थेशं वर्धमानैनमारणम् ।
घनाघनकिरीटाग्रनतक्रमयुगं भजे ॥
पञ्चबाणविदग्धानां पञ्चानां परमेष्ठिनाम् ।
पादपद्मं सुरेन्द्राणां किरीटमणिरञ्जितम् ॥

गणेन्द्राणां खगेन्द्राणां मणिमौल्यग्रलालितम् ।
चरणाब्जं भजे भक्त्या कवित्वशक्तिशङ्करम् ॥
गुणभद्रस्तु मे नित्यं गुणभद्रः समन्ततः ।
भद्रः समन्तभद्रोऽपि भावुकं दिशतु ध्रुवम् ॥
अकलङ्कोऽपि कल्याणं चाकलङ्कः करोतु मे ।
पूज्यपादः पूज्यपादः सद्भिर्लोके विचक्षणः ॥
जिनसेनमुनिं वन्दे जिनशासनभासितम् ।
भद्रबाहुर्भद्रबाहुर्भद्रमूर्तिर्ममापि च ॥
जम्बुस्वाम्यपि जम्भारिवन्दितः शुभमातनोत् ।
सिद्धचक्रं धर्मचक्रं सर्वरोगविशासितम् ॥
चक्री वज्री नृभूपादिविनतं विदितं यजे ।
रत्नत्रयं स्तुवे भक्त्या चिरत्नं शक्रपूजितम् ॥
मुक्तिशर्मकरं नित्यं दुरितं बृन्दनाशकम् ।
शारदा सारदप्रज्ञा प्रकृष्टा विश्वपूजिता ॥
जिनेन्द्रास्याब्जसञ्जाता विधत्तां विमला मम ।
जिनेशागमसङ्घातं मिथ्याशासनमारणम् ॥
भजेऽहं जिनचन्द्रेण भाषितं सुखदायकम् ।
जिनसेनमुनिं वन्दे जिनशासनभासितम् ॥
जिनपादाम्बुजे भृङ्गं जनलालितधीमणिम् ।
कुन्दपुष्पयशोबृन्दं कुन्दकुन्दाख्यसूरिणम् ॥
कवीनामग्रणीं स्वान्ते स्मरामि विकलान्वितम् ।
[गुणभद्रस्तु मे नित्यं गुणभद्रस्समन्ततः ॥
भद्रस्समन्तभद्रोऽपि भावुकं दिशतु ध्रुवम् ।
अकलङ्कोऽपि कल्याणं चाकलङ्कः करोतु मे ॥
पूज्यपादः पूज्यपादस्सद्भिर्लोके विचक्षणः ।]
जिनसेनादिगुरवो नानाशास्त्राब्धितीरगाः ॥
जयन्तु निखिलोत्कृष्टाः पीयूषनिभभाषिताः ।
इत्यादिमङ्गलस्तोत्रं ग्रन्थप्रारम्भसिद्धये ॥

सर्वविघ्नविनाशाय कारितं तनुबुद्धिना ।
भारती भामिनी वव्रे जीवन्धरवरं चिरात् ॥
सौवर्णांतस्य कण्ठोऽसौ ममाद्यार्धस्रजं ददौ ।
वादीभसिंहसूर्यादिकविभिः श्रुतपारगैः ॥
कौरवस्यास्य वृत्तान्तं गद्यैः पद्यैः प्रभाषितम् ।
ज्ञातुं तच्चरितं लोके न शक्नोति ततो मया ॥
सुलभं तुच्छबुद्धीनां तेषां वृत्तं च गद्यते ।

* * * *

श्रीवीरस्वामिपादाब्जं विश्वविघ्ननिषूदनम् ।
प्रणम्य वक्ष्ये चरितं जीवकीयं पुलाकतः ॥
जम्बूद्वीपेऽत्र भरते जिनसद्मसमाकुले ।
क्षेत्रे मगधदेशोऽस्ति वसुधान्यसमाकुलः ॥
विशेषकं तस्य भाति नाम्नेव नगरश्चयम् ।
पुरं राजगृहं नित्यं शक्रपत्तनसन्निभम् ॥
तस्य शास्ता धरानाथः श्रेणिकाख्यो विभासते ।
सर्वभूपकिरीटाग्रनम्रपादयुगः सदा ॥

* * * *

सत्यंधरोऽस्ति राजास्मिन् विजयाख्या प्रियाभवत् ।
तयोः सुतो बभूवासौ जीवंधर इति प्रियः ॥

* * * *

**Colophon:**

इत्यप्पाण्डनाथाभिधानोपासकेन कलिते श्रीसात्यन्धरिप्रबन्धे महाचरिते सरस्वतीकाण्डो नाम प्रथमकाण्डः ।

**End:**

जिनं च भव्या अनिशं प्रणध्वं भक्त्या जगन्नाथमिमं मुनीशम् ।
सुखाय निर्वाणश्रियस्सुरेशं विरक्तचित्ताः किल वर्धमानम् ॥
लक्ष्मी चला संसृतिदुःखहेतुः कारागृहाभं भवनं वधूटचः ।
तपः कुरुध्वं निगलप्रदीपा बुद्ध्वा भवप्रकृतिमेव भव्याः ॥

**Colophon:**

इत्यप्पाण्डनाथाभिधानोपासकेन कलिते श्रीसात्यन्धरिप्रबन्धे महाचरिते जीवन्धरनरेश्वरसंसारवैराग्यद्वादशानुप्रेक्षाचिन्तनजिनभवनप्रवेशनजिनस्तुतिसुर-व्यावर्णनो नाम षोडशः काण्डः ।

संसारबन्दी सप्तदशकाण्डः ।

जिनेशं तीर्थनाथेशं प्रणौमि जगतां प्रभुम् ।
श्रीवर्धमाननामानं विबुधाधीशवन्दितम् ॥
ततस्साकं वधूमित्रानुजपार्थिवनागरैः ।
वेष्टितो भ्रमणं कुर्वन् जीवन्धरधरापतिः ॥

* * * *

इत्थं स्तुत्वा तयोः पार्श्वे निषसाद महीपतिः ।
ताभ्यां यतिवराभ्यां च दत्ताशीर्वादसङ्गतः ॥
पश्चाणुव्रतमप्राक्षीद्गुणव्रतकदम्बकम् ।
शिक्षाव्रतमसौ राजा ताभ्यामुत्तमगारिणाम् ॥
एकादशविधं धर्मं गेहिनां जीवको नृपः ।

---

R. No. **5482.**

Paper. 10¾ × 10 inches. Foll. 76. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1929-30 from a Library MS. described under R. No 659.

**रघुनाथभूपालीयम्.**

RAGHUNĀTHABHŪPĀLĪYAM.

Same work as that described under R. No. 659(*d*) ante.

By Kṛṣṇayajvan.

Contains Vilāsas 1—8 complete.

---

R. No. **5483.**

Paper. 10⅝ × 9¾ inches. Foll. 10. Lines, 20 in a page. Dēvanāgarī Good.

Restored in 1929-30 from a Library MS. No. 2-14-18.

**साहित्यकल्पवल्ली.**

SĀHITYAKALPAVALLĪ.

A work on poetics giving illustrations in praise of Gajapati Puruṣōttamadēva.

By Anantaguru of Śaṭhamarṣaṇagōtra and a descendant of Tirumalācārya. The mother's name of the author was Tōcamāmbā.

Breaks off in the 2nd Guccha.

**Beginning:**

अत्र तावदिदं विचार्यते—किं काव्यमीमांसाशास्त्रमनारम्भणीयमाहोस्विदारम्भणीयं वेति। अनारम्भणीयमिति प्राप्तम् , विषयप्रयोजनयोरसंभवात्। न हि निर्विषये निष्प्र . . . अपि ; किं पुनः प्रेक्षापूर्वकारिणो विवेचकाः। ननु काव्यमीमांसाशास्त्रस्य काव्यमेव विषय इति चेन्न, तस्य निषिद्धतयाऽमीमांस्यत्वेनासत्कल्पत्वात्। काव्यालापांश्च वर्जयेदिति स्मर्यते। न च स . . . दाह नच प्रयोजनमपि किञ्चित् पश्यामः। ननु काव्यं तावत् सप्रयोजनमेव , दृष्टादृष्टफलसम्पादकत्वात्। अस्ति हि लाभपूजादिकं फलम्। अस्ति च कीर्तिसम्पादनद्वारेणादृष्टफलं स्वर्गादि . . . . . स्वेन नरकपाताद्यनर्थनिवृत्तिः। संभाव्यते च पुराणादेरिवास्यापि रामादिवद्वर्तितव्यम् , न रावणादिवदिति विधिनिषेधसंस्पर्शेनोपदेशरूपतया पुरुषार्थपर्यवसायित्वम्।

* * * *

नच जगति गजपतिश्रीपुरुषोत्तमदेवमतिशेरते गुणैर्दाशरथिरामादयोऽपि, दूरे पुनरर्वाचीना नृपखेटकीटा उपलभ्यन्ते च।

* * * *

**Colophon:**

पुरुषोत्तमभूपालक . . . . . . . . ।
विजयतेऽनन्तगुरुकृतकरण्डिका ॥

इति श्रीतिरुमलान्वयरत्नाकरसुधाकरेण निगममार्गप्रतिष्ठापनाचार्येण शठमर्षणगोत्रकल्पवल्लीफलेन तोचमाम्बागर्भशुक्तिमुक्तामणिना सकलराद्धान्तरस(सर्व)स्ववेदिना दानवदमनदयाकटाक्षसंधुक्षितवाणीविलासेन श्रीमदनन्तगुरुणा विरचिते गजपतिपुरुषोत्तमदेवसाहित्यकल्पलतानामन्यलङ्कारशास्त्रे शास्त्रारम्भकर्तव्यताप्रतिपादन नाम प्रथमो गुच्छः पूर्णः।

विकसदमलगुच्छस्वच्छमारन्दबृन्दै-
र्दिशि विदिशि कवीन्द्रान्मोदयन्ती . . . ।
गजपतिसुरशाखिस्तम्बमालम्बमाना
विलसति कृतिरेषा साहितीकल्पवल्ली ॥

इन्दीवरदलश्याममिन्दिरानन्दकन्दलम्।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥

. . . . . . . प्राधान्यात् प्रथमं रसस्वरूपमेव निरूपयामः ।
इह विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति सूत्रम् ॥

**End:**

नायिकादर्शनेनेयं मे भूयादित्याकारेण काचिदिच्छात्मिका अन्तःकरणवृत्तिरुदेति । तस्यां च चैतन्यं प्रति . . . . तदेव च समनन्तरं संभोगादिव्यापारचरितान्तःकरणवृत्तिप्रतिबिम्बितं संभोगादिसुखमभिधीयते । तदानीमपि पद्वेदनीयमेव तत् । लौकिक ।

---

R. No. **5484.**

Paper. $10\frac{5}{8}$ × 10 inches Foll. 68. Lines, 20 in a page. Grantha. Good.

Restored in 1929–30 from a Library MS. described under R. No. 3948

**कन्यामाधवम्.**

KANYĀMĀDHAVAM.

Foll. 1*a*—67*b*. Fol. 68 is left blank.

Same work as that described under R. No. 3948(*b*) ante.

By Subrahmaṇya.

Complete.

---

R. No. **5485.**

Paper. $10\frac{5}{8}$ × $9\frac{1}{2}$ inches. Foll. 174. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1929–30 from a Library MS. described under D.C.S. No. 13092.

**चरकसंहिताव्याख्या,**

CARAKASAṀHITĀVYĀKHYĀ.

Foll. 1*a*—173*a*. Foll. 173*b* –174 are left blank.

Same work as that described under No. 13092 of the D.C.S. MSS., Vol. XXIII. By Haricandra.

Contains the 3rd Adhyāya of the Sūtrasthāna.

---

R. No. **5486.**

Paper. $10\frac{1}{4}$ × $9\frac{1}{2}$ inches. Foll. 81. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1920–30 from a Library MS. described under No. 3873.

रामवर्मविलासः.

RĀMAVARMAVILĀSAḤ.

Foll. 1a—80a. Foll. 80b--81 are left blank.

Same work as that described under R. No. 3873 ante.

By Bālakavi, son of Kālahastikavi.

Complete in 5 acts.

---

R. No. **5487.**

Paper. 10¼ × 9½ inches. Foll. 273 Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1929–30 from a Library MS. described under R. No. 592.

पञ्चपादिकाविवरणोज्जीवनी.

PAÑCAPĀDIKĀVIVARAṆŌJJĪVANĪ.

Bound in two volumes.

Same work as that described under R. No. 592 ante.

By Yajñēśvaradīkṣita, son of Carkūri Koṇḍubhaṭṭa.

Complete.

---

R. No. **5488.**

Paper. 10⅜ × 9⅝ inches. Foll. 64. Lines, 20 in a page. Dēvanāgarī Good.

Restored in 1929–30 from a Librery MS. described under R. No. 3140.

पादुकासहस्रव्याख्या — प्रदीपिका.

PĀDUKĀSAHASRAVYĀKHYĀ: PRADĪPIKĀ.

Same work as that described under R. No. 3140(b) ante.

By Hārita Nṛsiṁha.

Complete.

---

R. No. **5489.**

Paper. 10⅝ × 8⅝ inches. Foll. 45. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1929–30 from a Library MS. described under R. No. 289.

वैद्यकल्पतरुः.

VAIDYAKALPATARUḤ.

Same work as that described under R. No. 289 (of the Telugu part). By Mallari Paṇḍita, son of Kēśavācārya.

Contains Adhikaraṇas 21 complete. There are some blank pages in the middle.

---

## R. No. **5490.**

Paper. $10\frac{1}{2} \times 9\frac{5}{8}$ inches. Foll. 260. Lines, 20 in a page Dēvanāgarī Good.

Restored in 1929—30 from a Library MS. described under R. No. 3947.

### तत्त्वचिन्तामणिप्रकाशसारः.

### TATTVACINTĀMAṆIPRAKĀŚASĀRAḤ.

Same work as that described under R. No. 3947(*b*) ante.

By Peṭṭādīkṣita.

Contains up to the end of the Nirvikalpakavāda.

---

## R. No **5491.**

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 266. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1929–30 from a Library MS. described under R. No. 3927.

### अलङ्कारराघवम्.

### ALANKĀRARĀGHAVAM.

Foll. 1*a*—266*a*. Fol 266*b* is left blank.

Bound in two volumes.

Same work as that described under R. No. 3927 ante.

By Yajñēśvaradīkṣita son of Carkūri Koṇḍubhaṭṭōpādhyāya

Complete

---

## R. No. **5492.**

Paper. $10\frac{5}{8} \times 9\frac{1}{4}$ inches. Foll. 24. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1929-30 from a Library MS. described under R. No. 165.

### अद्वैतसिद्धान्तविजयः.

### ADVAITASIDDHĀNTAVIJAYAḤ.

Foll. 1*a* —23*a*. Foll. 23*b*—24 are left blank.

Same work as that described under R. No. 165(*c*) ante.

By a disciple of Jagannāthāśrama.

Incomplete.

---

## R. No. **5493.**

Paper. $10\frac{5}{8} \times 9\frac{5}{8}$ inches. Foll. 144. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1929–30 from a Library MS described under R. No. 168.

### अलङ्कारशिरोभूषणम्.
### ALAṄKĀRAŚIRŌBHŪṢAṆAM.

Same work as that described under R. No. 168 ante.

By Kandālayārya, son of Rāmānujācārya and grandson of Kēśavārya of Āyalam family.

Complete.

---

## R. No. **5494.**

Paper. $10\frac{5}{8} \times 9\frac{5}{8}$ inches. Foll. 28. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1029–30 from a Library MS. described under R. No. 165.

### अद्वैतसिद्धान्तविजयव्याख्या.
### ADVAITASIDDHĀNTAVIJAYAVYĀKHYĀ.

Foll. 1*a*—26*b*. Foll. 27—28 are left blank.

Same work as that described under R. No. 165(*b*) ante.

Incomplete.

---

## R. No. **5495.**

Paper. $10\frac{5}{8} \times 9\frac{5}{8}$ inches. Foll. 29. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1929–30 from a Library MS. described under R. No 387.

### सिद्धान्तसारः.
### SIDDHĀNTASĀRAḤ.

Same work as that described under R. No. 387(*a*) ante.

By Kandāḍai Appagoṇḍācārya.

Complete.

## R. No. 5496.

Paper. $10\frac{5}{8} \times 9\frac{3}{8}$ inches. Foll. 186. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1929-30 from a Library MS. described under R. No 2545.

### ब्रह्मसूत्रविवरणम्—शिवदर्पणम्.

### BRAHMASŪTRAVIVARAṆAM : ŚIVADARPAṆAM.

Foll. 1*a*—185*b*. Fol. 186 is left blank.

Same work as that described under R. No 2545 ante

Janmādyadhikaraṇa complete.

---

## R. No. 5497.

Paper. $10\frac{5}{8} \times 9\frac{5}{8}$ inches. Foll. 42. Lines, 20 in a page Dēvanāgarī Good.

Restored in 1929-30 from a Libeary MS. described under R. No. 3905.

### बोधायनश्रौतसूत्रभाष्यम्.

### BŌDHĀYANAŚRAUTASŪTRABHĀṢYAM.

Foll. 1*a*—41*a*. Foll. 41*b* and 42 are left blank.

Same work as that described under R No. 3 05 ante.

By Bhavasvāmin.

Contains the Pūrvakalpa complete and 4 Adhyāyās in the Karmāntasūtras (Uttarakalpa).

---

## R. No. 5498.

Paper. $10\frac{5}{8} \times 9\frac{5}{8}$ inches. Foll. 66. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1929-30 from a Library MS described under R No. 4115.

### अवधूतगीता, सव्याख्या.

### AVADHŪTAGĪTĀ WITH COMMENTARY.

Foll. 1*a*—65*b*. Fol. 66 is left blank.

Same work as that described under R. No 4115 ante.

Contains the first Prakaraṇa complete.

## R. No. 5499.

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 221. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1929–30 from a Library MS. described under R. No. 3906.

### सूर्यसिद्धान्तः, कामदोग्ध्रीसहितः.
### SŪRYASIDDHĀNTAḤ WITH KĀMADŌGDHRĪ.

Same work as that described under R. No. 3906 ante.

The commentary is by Timmayajvan, son of Vēṅkaṭāmbā and Mallayajvan and grandson of Honnayārya.

Contains the Adhyāyas 3 to 14 complete.

---

## R. No. 5500.

Paper. $10\frac{5}{8} \times 9\frac{3}{8}$ inches. Foll. 258. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1929–30 from a Library MS. described under R. No. 4065.

Bound in two volumes.

### ब्रह्मगीतातात्पर्यबोधिनी.
### BRAHMAGĪTĀTĀTPARYABŌDHINĪ.

Same work as that described under R. No. 4065 ante.

By Vēṅkaṭēśvaraśāstrin.

Complete.

---

## R. No. 5501.

Paper. $10\frac{1}{2} \times 9\frac{3}{4}$ inches. Foll. 54. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1930–31 from a MS. brought by Mr. V. Nārāyanasvāmiśāstri, Mylapore, Madras.

### शृङ्गारतरङ्गिणी.
### ŚṚṄGĀRATARAṄGIṆĪ

A drama in five acts describing the story of bringing the Parijata tree from Indra's abode by Śrī Kṛṣṇa.

By Vēṅkaṭācārya, son of Annayārya

Complete.

(कर्णं दत्वा) किं ब्रूथ ? ।

यत्र चित्रपदगुम्भसम्भृतिर्यत्र चापि सरसा रसस्थितिः ।
रूपकं नवकथानिरूपकं तादृशं किमपि संप्रयुज्यताम् ॥

सहर्षम् ।

वसुविसरसमार्जनाय राज्ञोपशयितुमोषधिमूलमाप्तुमिच्छोः ।
निधिरिव भवतामिह प्रसादः समजनि मे सुलभः पुरा कृतेन ॥

(इति नेपथ्याभिमुखमवलोक्य), अये मारिष इतस्तावत् ।

(प्रविश्य) मारिषः—

* * *

क्षारं वारिधिवारि वारिद इव प्राचीनवाचीरितं
तात्पर्यं परिगृह्य रस्यममृतोदारं शठारिर्मुनिः ।
गोत्रे यत्र हि नाथनाममहिते सद्द्राविडाक्त्यात्मना
प्रावर्षीदखिलं विभाति स महावंशो विशुद्धोन्नतिः ।
तस्मिन् विस्मयनीयवैभवयुते शाखोपशाखोन्नते
वंशे श्रीमति यामुनार्यमुखसन्मुक्तावलीशालिनि
त्रय्यन्तार्य इवापरः परमतदुर्वारगर्वाटवी-
भ्राम्यद्वादिमदावलावलिसृणिः श्रीतातयार्याग्रणीः ॥

श्रीतातयार्यतनयो घनयोगसाङ्ख्य-
सत्तर्कतन्त्रमुखतन्त्रगणस्वतन्त्रः ।
भाति स्म निर्मलविनिर्मलवंशसिन्धु-
पूर्णेन्दुरण्णयगुरुर्गुरुसन्मनीषः ॥

भ्राता यस्याभिजातानुपमनिपुणनिधिस्सर्वतन्त्रस्वतन्त्रः
त्राता नैतादृशोऽन्यो निगमशिरस इत्याहिमाद्या च सेताः ।
जाताभिख्यो विभाति प्रतिमतकथकाटोपनीहारचण्ड-
ज्योतिर्भूतप्रतापो विमलगुणनिधिः श्रीनिवासार्यवर्यः ॥

किञ्च—

शर्वादितत्त्वपरदुर्वादिवादशननिर्वापणादिचतुरः
स्वर्वाहिनीलहरिगर्वातिरेकहदरखर्वाभिजानफणितिः ।

दुर्वारवैभवसुपर्वाधिपार्यशतपर्वानिशायिधिषणो
गुर्वागमान्तयुगनिर्वाहकृज्जयति सर्वार्थदोऽण्णयगुरुः ॥

तत्तनयेन सविनयेन तच्चरणपरिचर्यैकभूम्ना स्वाग्रजश्रीनिवासतातार्यकरुणापरिणाहलब्धपूर्वतन्त्रमहिम्ना वेङ्कटाचार्यनाम्ना सकलसाम्राज्यराराज्यमानमाननीयबहिरीपामिनायककुमारवेङ्कटपतिनायकमहास्थानपाण्डित्यगुरुत्वभूषितेन विरचितमस्ति सुगुणमणिपटकं शृङ्गारतरङ्गिणी नाम नाटकम् । यदभिनयविशारदमनीषाविशेषा इमे शैलूषाः ।

* * * *

अस्ति खलु पुरन्दरसुन्दरीहृदयानन्दनस्य नन्दनवनस्य परिसरे अमन्दमन्दाकिनीतरङ्गसङ्गसङ्घर्षणोत्पतच्छीकरनिकरतारकितमतुलममिहितमासितनुलसीमहितं तारकं नाम वनम् ।

तत्र च—

ध्यानामृताभ्युदितमानसपुण्डरीक-
स्थानभ्रमद्भ्रमरदम्बुजपत्रनेत्रः ।
नानाविधप्रविभिगमादिषु वर्तनेषु
स्त्यानाशयोऽस्ति शठमर्षणमौनिचन्द्रः ॥

स च—

आमन्त्र्य पूर्वमसमानि सुमानि पञ्च
कल्पद्रुषु क्रमश एष विलूय भूयः ।
कालेषु पञ्चसु करोति हरेः सपर्या
पर्यायतः सरसभक्तिरसोत्तरङ्गः ॥

किञ्च—

काले काले चैष नाम्नां सहस्रं पारं पारं पुष्पितं पुष्पवर्गम् ।
विष्णोर्जिष्णोरर्पयन्नित्यमास्ते शान्तस्वान्तो मौनिराजोऽतिदान्तः ॥

* * * *

चित्रा— अत्रान्तरे सकलकलाविशारदो नारदोऽप्यागतः पुरन्दरेण समर्पितं तत्कुसुमं गृहीत्वा द्वारकां गत इति ।

* * * *

**End:**

(तथापीदमस्तु भरतवाक्यम्) ।

सदा जिह्वासिंहासनमधिवसन्ती विधिसती
रसोन्मेषादेषा विहरतु विशेषाच्छ्रुनवताम् ।
मदाम्भस्संभ्रान्तभ्रमरमुखरैर्दन्तिनिकरैः
समन्ताज्जृम्भन्तां सुकविभवनप्राङ्गणभुवः ॥

---

R. No. **5502.**

Paper. $10\frac{1}{2} \times 9\frac{3}{4}$ inches. Foll. 52. Lines, 20 in a page Dēvanāgarī. Good.

Transcribed in 1930–31 from a MS. brought by Mr. V. Nārāyaṇasvāmiśāstri, Mylapore, Madras.

हयवदनविजयचम्पूः.

HAYAVADANAVIJAYACAMPŪḤ.

Foll. 1*a*–51*a*. Foll. 51*b*—52 are left blank.

The deeds of God Nārāyaṇa in the incarnation of Hayagrīva are described herein.

By Vēṅkaṭarāghava of Vādhūlagōtra.

Contains 2 to 6 Ullāsas complete; but the 1st Ullāsa is incomplete.

**Beginning:**

लक्ष्मीं सिंहासनाङ्कस्फटिकमणितिरस्कारधीरप्रतीको
भक्ताभीष्टार्थदानव्रतविहितकनत्कङ्कणास्निग्धपाणिः ।
तुङ्गैः पीयूषधाराविकिरणशिशिरैर्निर्मलापाङ्गजालैः
देवः संमानयन्मामवतु हयमुखो देवतासार्वभौमः ॥

विद्वज्जनेष्टविविधार्थविशेषदान-
मुख्यव्रते लसति वाजिमुखे दयार्द्रे ।
अन्यान् भजामि किमितीह शरत्सुधांशुं
त्यक्त्वा किमन्यमुपयाति चकोरशावः ॥

श्रीमानुद्दामभूमा विमतबुधमताटोपधिक्कारधीर-
व्याहारोदारकीर्तिप्रविमलवसनाबद्धदिक्सौधसीमा ।
श्रीमद्वाधूलवंशाम्बुधिविधुवरदाचार्यलब्धागमान्तः
श्रेयो मे वेङ्कटार्यो दिशतु गुणनिधिः श्रीनिवासार्यसूनुः ॥

श्रीवेङ्कटार्यगुरुवर्यपदारविन्द-
मन्दारसञ्जनित(साधु)कवित्वकीर्तिः ।
यस्मादहं तदिह तं प्रणमन्नभीष्ट-
मासाद्य केवलकृतज्ञपदं व्रजामि ॥

शक्त्यादिभिर्विरहितोऽपि हयास्यपूर्व-
कारुण्ययुग्गुरुकटाक्षसुरक्षितोऽहम् ।
काव्यं करोमि कपिभिर्न विलङ्घितोऽमृ-
त्किं से(तुनाहि) रघुवीरकृतेन वार्धिः ॥

बुधानामास्वाद्यं सरसकवितासागरयशः
प्रदानैकायत्तं निरवधिकमाधुर्यभरितम् ।
तुरङ्गास्यस्तोत्रामृतरसमुदारं मम परं
रसज्ञान्वर्थाख्या भवितुमनुभूयाद्य यतते ॥

सद्गद्यपद्यमय एव भुवि प्रबन्धो
रत्नाञ्चितः कनकहार इवातिवेलम् ।
मोदं करोति विदुषां तदहं प्रबन्ध-
मेवंविधं विरचयन् प्रमदं करोमि ॥

अल्पापि मत्कृतिरशेषबुधानुमोदं
श्रीकैटभारिगुणरत्नयुता करोतु ।
लावण्यलेशविधुरापि यथा युवान-
मानन्दयत्यधिकभूषणयुग्वधूटी ॥

तत्र खलु विचित्रगतिमुलभकलभवलभिदुपलदण्डायमानशुण्डाविधूतविटप-समुत्पतन्मधूदितमदच्छत्रायमाणमधुपपटलीविटपिनिस्सरत्प्रसवरजःशिशिरमृदुल-पुलिनसुखनिषण्णकुरङ्गीनिशम्यमानसरससङ्गीतसुखदायककीचकगायकप्रदेशे

* * * *

नैमिशाभिधाने सततवलमानमन्दपवमाने वने निरन्तरहरिपदसरोजसंसक्तचित्तभृङ्गं दूरीकृतदुरितसङ्गं शौनकादिकमभूत् समुपचिततपोनियन्त्रित-सुरनिकुरुम्बं मुनिकदम्बकम् ।

* * * *

तत्रापि—

हयवदनावतारचरितं भरितं सुगुणै-
र्विबुधजनप्रमोदकलिकासु विकासकरम् ।
तदिह निशम्य नः श्रुतियुगं यतेन परमा
मनुभवितुं मुदं परमुदञ्चय तत्सकलम् ॥

इत्यादरानुकलितं ललितं मुनीनां
श्रुत्वा वचः स खलु सूतमुनिस्तदानीम् ।
आनन्दमुन्नतमवाप्य हयाननस्य
वृत्तान्तमेवमवदद्बुधनन्दनीयम् ॥

* * * *

**Colophon:**

इति श्रीमद्वाधूलवेङ्कटराघवेन विरचिते हयवदनविजयाह्वये चम्पूप्रबन्धे द्वितीयोल्लासः समाप्तः ।

**End:**

अथ सुरपतिप्रभृतयोऽपि निभृतानन्दरसाः कैटभारातिचरणकमलमकरन्दग्रसनपरिपोषितनिजमृगमदतिलकचञ्चरीकाः किरीटतटावतंसीकृततदाज्ञाः स्वायतनानि सुखमवापुः ।

भोगांस्तया कमलया सह कैटभारि-
र्लीलानुगाननुभवन् वनसीम्नि तत्र ।
कामान् सुरद्रुम इवानिशमाश्रितानां
कुर्वंश्चिरं विलसति स्म स देवदेवः ॥

इत्यब्रवीत् सुरमुनिं प्रति पद्मयोनि-
रित्युत्तरामुरमुवाच शुको द्विजेन्द्रः ।
इत्यादरेण स तु सूतमुनिर्मुनीन् प्र-
त्युक्त्वा कथां परमिमां प्रमदं वितेने ॥

अल्पैरप्यलसन्मदीयवचनैरेतैरसारैरपि
प्रीतो मे कमलासखः स मधुजिच्छ्रेयांसि देयात् सदा ।
धानामुष्टिभिरेव तुष्टिमधिकां लब्ध्वा कुचेलाय स
श्रीमान् किं न ददौ श्रियं सुरपतिश्लाघाविशेषोचिताम् ॥

**Colophon:**

इति श्रीमद्वाधूलकुलललामसकलविबुधकवीन्द्रलालनीयकविताधुरन्धरवेङ्कट-गुरुवरचरणारविन्दवन्दनमहिमसमासादितसरसकवितासम्प्रदायेन वेङ्कटराघवेण विरचिते हयवदनविजयाह्वये चम्पूप्रबन्धे षष्ठोल्लासः समाप्तः ॥

R. No. **5503.**

Paper. $10\frac{1}{2} \times 9\frac{1}{4}$ inches. Foll. 54. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1930-31 from a MS received from Dr. C. Kunhan Rajah, Madras.

उणादिसूत्रवृत्तिः.

UṆĀDISŪTRAVṚTTIḤ.

Foll. 1*a*—83*b*. Fol. 84 is left blank.

Similar to the work described under No. 1269 of the D.C.S. MSS., Vol. III.

Contains 1—10 Pādas complete.

**Beginning:**

स्वयम्भुवे नमस्कृत्य प्रणिपत्य सरस्वतीम् ।
वक्ष्ये वृत्तिमुणादीनां यथाबुद्धि यथाक्रमम् ॥

अर्तिसृधृधम्यश्यवतरिभ्यो निः ।

इहेमे अधिकाराः सम्बध्यन्ते—प्रत्ययः परश्च आद्युदात्तश्च अनुदात्तौ सुप्पितौ धातोः तत्रोपपदं सप्तमीस्थं कृदतिङ् वासरूपोऽस्त्रियाम् वर्तमाने लट् पुनस्संज्ञायाम् उणादयो बहुलम् भूतेऽपि दृश्यन्ते भविष्यति गम्यादयः कर्तरि कृत् दाशगोघ्नौ सम्प्रदाने नाभ्यामन्यत्रोणादयः कालाः सम्बध्यन्ते । एते च स्वरितलिङ्गाः सङ्गृह्यमाणाः स्वविषयोद्भावनातुष्टा न समर्थाः । आ उणादिपरिसमाप्ते दशपाद्यात्रैवानुवर्तन्ते । अत्र यावता-मधिकाराणां प्रयोजनंतत्र तावन्त एवाभिसम्बध्यन्ते । एतेष्वनुवर्तमानेषु एभ्यो धातुभ्यो वर्तमानकाले यथासंभवं कर्त्रादिषु कारकेषु संज्ञाविषयेषु परः निप्रत्ययो भवति । ऋगतौ भौवादिकः ऋसृगतौ वा जौहोत्यादिः । ऋच्छति इयर्ति अर्यते वा अरणिः ।

* * * *

**Colophon:**

इत्युणादिवृत्तौ प्रथमः पादः ।

**End:**

लीङ्रीङोर्ह्रस्वश्च पुङ् तरौ श्लेषकुत्सनयोः ।

लीङ् रीङ् इत्येतयोः धात्वोः यथासङ्ख्यं नश्च रश्च तरौ प्रत्ययौ भवतः। पुङ् चागमः ह्रस्वश्च श्लेषकुत्सनयोरर्थयोर्लीङ् श्लेषलीयते इति लिप्तं श्लेषः कर्म रीङ् स्रवणे रीयत इति रिप्रं कुत्सितं कर्म ।

स्थः स्ताम्बजवकौ च ।

स्थो धातोः अम्बच् अवक इत्येतौ प्रत्ययौ भवतः । स्त इत्ययं चादेशः धातोः । ष्ठा गतिनिवृत्तौ तिष्ठतीति स्तबकः । पुष्पापीडः कर्ता ।

**Colophon:**

इत्युणादिवृत्तौ प्रकीर्णको नाम दशमः पादः ।

---

R. No. **5504.**

Paper. $10\frac{1}{2} \times 9\frac{3}{4}$ inches. Foll. 28. Lines, 20 in a page. Grantha Good.

Transcribed in 1930-31 from a MS. of M.R.Ry. Tambi Nayinār, Perumendūr, Tindivanam taluk.

**सात्यन्धरिप्रबन्धः.**

SĀTYANDHARIPRABANDAḤ.

Foll. 1*a*—26*b*. Foll. 27—28 are left blank.

Same work as that described under R. No. 5481 ante, wherein see for the beginning. By Appandanātha.

Contains the Kāṇḍas 17th and 18th complete; but wants the beginning in the 17th Kāṇḍa.

**End:**

सोऽयं श्रीधरगोत्रनाकपरमादित्यः कवीन्द्रः सुधीः
श्रीमद्वीरपुरीनिषण्णनिलयः श्रीतम्बिजैनाङ्गजः ।
श्रीजीवन्धरनाथजातचरितं पूतं महाशर्मदं
चक्रे पापहरं सुपुण्यकलितं अप्पाण्डनाथाभिधः ॥
श्रीमान् श्रावकपण्डितार्यकविभिरस्तोप्पाण्डनाथार्हतः
सारं काव्यमिदं प्रबन्धममलं चारित्रमिद्धं वरम् ।

श्रीमान् जीवकराजराजकलितं शक्रार्यपूज्यं सदा
पाठ्यं निर्गतमेतदिद्धमनिशं चाप्पाण्डनाथाननात् ॥
श्रीलक्ष्मीसेनस्य गुरोः कुलस्य श्रीवेङ्कटाचार्यकलागुरोश्च ।
श्रीशालिग्रामे चरितं हि चक्रे छात्रस्सिंहपुरिवामिनस्य ॥ ९
युगनवकाण्डसमेतं चरितं जीवन्धरोत्पन्नम् ।
पूतमिदं भुवि भव्यैः पाठ्य जीयाच्च सोमभान्वन्तम् ॥
कल्पकभूरुह इद्धं चरितं क्षोण्यां हि जीवकोत्पन्नम् ।
द्यनवकाण्डसमेतं पठतां देयात्लक्ष्मीहितं यद्वत् ॥
लक्ष्मीसेनगुरुश्च जीवकजिनराजवेङ्कटाचार्यः ।
विप्रकुलनाकभानुस्सोप्पानाथोऽपि मङ्गलं देयात् ॥
लक्ष्मीसेनगुरुश्चापि वेङ्कटाचार्यसद्गुरुः ।
सोऽप्पानाथगुरुर्देयान्मङ्गलं जीवको जिनः ॥
त्रिषष्टिसहितः पञ्चसहस्रश्लोकसञ्चयः ।
चरिते जैनके नूनमस्मिन् भवति पण्डिताः ॥

**Colophon:**

इत्यप्पाण्डनाथाभिधानोपासकेन कविपुण्डरीकेण कलिते श्रीसात्यन्धरिप्रबन्धे महाचरिते जीवन्धरस्वामिनिर्वाणगमनवर्णनो नामाष्टादशः काण्डः ।

इति सात्यन्धरिप्रबन्धं परिसमाप्तम् ॥

---

R. No. 5505.

Paper. $10\frac{1}{2} \times 9\frac{3}{4}$ inches. Foll. 102. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1930-31 from a MS. received from Dr. C. Kunhan Rājah of Adyar Library.

न्यायरत्नदीपावली.

NYĀYARATNADĪPĀVALĪ.

Foll. 1*a*—101*a*. Foll. 101*b*—102 are left blank.

An exposition of the chief doctrines of Advaita-Vēdānta according to Śaṅkarācārya. By Ānandānubhava.

Complete.

**Beginning:**

हरिपादं प्रणम्याथ वेदान्तार्थप्रसिद्धये ।
सन्न्यायरत्नदीपानामावलिः क्रियते मया ॥

यद्यपि वेदान्तार्थः स्फुट . . . . . . . . . भाष्यकारादिभिः, तथाप्यभिनवदुस्तर्कतिमिरैस्तिरोहित इवासौ । अतस्तत्प्रकाशनाय प्रयत्यते । ननु वेदस्यापि न विवक्षितार्थता अप्रमाणकत्वात् । किमु वेदवादिनोऽप्यनिष्टार्थानां वेदान्तानाम् । तथाहि यानि परस्परविरुद्धार्थानि वाक्यानि न तानि प्रमाणानि यथोन्मत्तवाक्यानि । तथाहि —ब्राह्मणो न हन्तव्य इत्यादि क्वचिदहिंसोच्यते । तथा ब्रह्मणे ब्राह्मणमित्यादि ब्राह्मणादिवधविधानम् । तथा नैष्ठिकं ब्रह्मचर्यमुच्यते । न कावनं परिहरेत्तद्व्रमपि गुर्वङ्गनादिगमनं च । तथा ब्राह्मणस्य सुरापानविधिनिषेधौ । एवं च ब्रह्मणि एकमेवाद्वितीयमित्यादौ विरोधो द्रष्टव्यः ।

* * * *

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्नारायणज्योतिःपूज्यचरणशिष्यस्य भगवत आनन्दानुभवस्य कृतौ न्यायरत्नदीपावल्यां प्रथमोऽध्यायः ।

**End:**

जीवन्मुक्तिप्रमाणं न विरुध्यते । उक्तं च तत्त्वविद्भिः मुक्तेरप्यवास्तवत्वम् ।

न विरोधो नचोत्पत्तिर्न बन्धो नैव साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ इति ।

तस्माददतिविशदा जीवन्मुक्तिः । तदेवं निरस्तसमस्ताप्रमाण्याद्युपप्लवेभ्यो वेदान्तेभ्यः सच्चैतन्यानन्दैकरसेऽद्वितीयात्मन्यपरोक्षज्ञानोपजन इति युक्तमुक्तम् । नच तत्र विरोधः । दर्शितानि च तत्साधनानि तत्फलं चेत्यशेषमपि निरवद्यमवसेयम् ।

आचार्यरत्नाकरसंप्रसूता सन्न्यायरत्नैरनिरत्नरूपा ।
उद्द्योतयन्ती परमं पुमांसं दीपावली स्यात्पुरुषार्थसिद्ध्यै ॥

**Colophon.**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्नारायणज्योतिःपूज्यचरणशिष्यस्य भगवत आनन्दानुभवस्य कृतौ न्यायरत्नदीपावल्यां चतुर्थोऽध्यायः ॥

R. No. **5506.**

Paper. 10½ × 9¾ inches. Foll. 76. Lines, 29 in a page. Dēvanāgarī Good.

Transcribed in 1930–31 from a MS of M R Ry Vāsudēvan Nambūdiri, Āiruppuram-mana, Vanniyankulam, Malabar district

उत्तररामचरितव्याख्या

UTTARARĀMACARITAVYĀKHYĀ.

Foll. 1*a*—75*a*. Foll. 75*b*—76 are left blank.

A commentary on Bhavabhuti's Uttararāmacarita. The commentator's name is not known.

Complete

**Beginning:**

पूर्वेभ्यः पूर्वकालप्रथितेभ्यः कविभ्यः वाल्मीक्यादिभ्यः । नमोवाकं छान्दसोऽयं प्रयोगः: वाल्मीक्यादीन् नमस्कृत्येत्यर्थः: इदं पश्चादुक्तं प्रशास्महे प्रार्थयामहे । यद्वयमात्मनः परमात्मनः कलामंशस्वरूपाममृताममृतरूपां निरतिशयतृप्तिहेतुमित्यर्थः, देवतां वाचं वाणीं विन्देमाहि लभेमहि । आदिकवीनां वाल्मीकिप्रभृतीनां पादेषु नमस्कृतिपूर्वकमस्माकमियं प्रार्थना यत्तेषामखिललोकमनोहारिणी वागस्मास्वप्यधिष्ठिता भवत्वित्यर्थः । नान्द्यन्ते नान्दीपाठादनन्तरम् ।

* * * *

तेन कविना प्रणीतं विरचितमुत्तरं रामचरितं तदभिधानं नाटकं प्रयोक्ष्यते, अस्माभिरिति शेषः । अभिनयेन प्रयोक्तुकामा वयमित्यर्थः ।

* * * *

**Colophon:**

चित्रदर्शनं नाम प्रथमोऽङ्कः ।

**End:**

विन्यस्तरूपा गृहीतरामादिभूमिका बुधाः पण्डिताः शब्दरूपवेदं यद्वा शब्दमूर्तिधरं साक्षात्परमात्मानं विष्णुं वेत्ति यः सः तस्य तथा परिणता प्रज्ञा बुद्धिः यस्य सः तस्य कवेः वाल्मीकेः । अथ च मम भवभूतेः तां प्रसिद्धामेनां रामायणरूपां वाणीं कथां परिभावयन्तु संमानयन्तु ।

काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च ।
शब्दमूर्तिधरस्यैते विष्णोरंशा महात्मनः ॥

इति विष्णुपुराणे ।

इति सप्तमोऽङ्कः ।

---

R. No. **5507.**

**Paper.** 10½ × 9¾ inches. Foll. 340. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1930–31 from a MS. of Dr. Kunhan Rajah, Adyar Library, Madras.

Bound in two volumes.

जैमिनीयश्रौतसूत्रभाष्यम्.

JAIMINĪYAŚRAUTASŪTRABHĀṢYAM.

Foll. 1*a*—338*b*. Foll. 339—340 are left blank.

A commentary on the Śrautasūtras of Jaimini.

By Bhavatrāta, son of Brahmadatta.

Complete.

**Beginning:**

नमस्त्रिनेत्राय जितात्मजन्मने विजन्मने जन्मनिवृत्तिहेतवे ।
नभस्वदाकाशकृशानुमेदिनीजलेन्दुभास्वद्यजमानमूर्तये ॥
जिगाय देवानपि यः स्वतेजसा विवेद च व्यास च वेदसागरम् ।
परावरज्ञः स पराशरात्मजो मया महात्मा प्रणिपत्यते मुनिः ॥
वेदार्थतत्त्वामलदर्पणं यश्चकार लोके ततकीर्ति शास्त्रम् ।
ज्ञानैकधाम्ने विदधामि तस्मै कृताञ्जलिर्जैमिनये नमस्याम् ॥

ध्यानेनारमयत्पुरां त्रिनयनं सोमेन यो वासवं
विप्रान् वेदतदङ्गतत्त्ववचनैर्वित्तेन विद्वज्जनम् ।
वन्दे ब्रह्मविदं द्विजन्मतिलकं तं ब्रह्मदत्ताह्वयं
तत्पादाम्बुजसेवनोपजनितप्रज्ञालवः प्राञ्जलिः ॥
यदधीनं शिवप्राप्तिरिहामुत्र च देहिनाम् ।
तस्यै विद्वत्समितये नमः क्षपितपाप्मने ॥

स मे गायत्रममृतं सामवेदार्णवामृतम् ।
यस्मादानशिरे मर्त्या ब्रह्मणो विबुधा इव ॥
मुनेर्ब्रह्मनिधेस्तस्य काश्यपस्य महात्मनः ।
बहवः प्रथिता वंशाः विवस्वत इवांशवः ॥
तेषु यस्याभवद्दपिर्माठरो मण्डनं परम् ।
मधुस्संवत्सरस्येव मणिः फणिपतेरिव ।
अस्मिन् संजज्ञिरे वंशे सामगा गुणशालिनः ।
[सिंहा इवार्णवे] तस्य पुत्रो बुधसमः सामग्र्यजुषु पारगः ॥
अवनीन्द्रैरवन्ध्यास्त्रैः शिरसा धृतशासनः ।
श्रुतिस्मृत्यर्थतत्त्वज्ञो धर्मकर्मसु दक्षिणः ॥
द्विजन्महितलाभाय द्विजन्मभिरुपाश्रितः ।
आसीदनवमोत्साहः सर्वेषु खलु जन्तुषु ॥
मातृतुल्यदयो नाम मातृदत्त इति श्रुतः ।
परां काष्ठां गतवतः समुतां सोऽथ कर्मणोः ॥
विश्वामित्रजमुख्यस्य ब्रह्मदत्तस्य लब्धवान् ।
तस्य जन्मनि यस्तेन स भवत्रात इत्यभूत् ॥
स स्ववागनुसृत्यैव व्याकरोत्यध्वरागमम् ।

श्रुतिविहितानां ज्योतिष्टोमादीनां क्रियाविशेषाणां नित्यनैमित्तिककाम्यानां तदधिकृतपुरुषैरवश्यानुष्ठेयत्वादैदंयुगीनानां च पुरुषाणां श्रुत्यालोचनेनैव संयन्ति तिसृणामनवयवायत्वात बह्वीषु च शाखासु सङ्कीर्णानां विधीनामेकशाखाध्यायिभिरनुपलक्ष्यमाणत्वात् बहुशाखाध्ययनक्षमायाश्च मेधापरः कस्यचिदपि कलाया अविद्यमानत्वात् क्रमादेश्च विशेषणस्य केषु चित्पदार्थेषु श्रुत्यनुमेयस्य दुर्ज्ञानत्वादन्यप्रकरणपठितानां चान्यस्मिन् प्रकरणे केषाञ्चिदङ्गानामनुष्ठानस्येष्टस्य ज्ञातुमशक्यत्वान्मन्त्रलिङ्गज्ञापितानां च कतिपयानां विधीनामल्पमतिभिरिदानींतनैरपरिज्ञायमानत्वात् भुवनानुग्रहपरैराचार्यैर्जैमिनिप्रभृतिभिः बह्वीनां शाखानां पारदृश्वभिः तपोबलोपलब्धतत्त्वावगमै स्रैषा विधिर्वैदिके क्रियामार्गमनुष्ठातारोऽनुतिष्ठेयुरित्येतदर्थं सर्वविधिपदार्थोपसंहारेण यज्ञशास्त्राणि प्रणीयन्त । तेष्विदमुद्रानुपदार्थप्रकाशनपरमाचार्येण जैमि

निना प्रणीतं शास्त्रम् । तत्र सर्वक्रतुप्रकृतित्वात् ब्राह्मणे च प्रथमं विहितत्वात् ज्योतिष्टोमोऽग्निष्टोमः प्रथमं प्रारभ्यते ।

* * * *

**Colophon:**

इति महोपाध्यायेन भवत्रात्रा विरचितायां जैमिनीयसूत्रवृत्तौ औद्गातृप्रवृत्तिक्रमो नाम प्रथमः खण्डः ।

**End:**

यानि षट्स्वराणि प्राकृते स्वरसामस्वस्माभिः क्लृप्तानि तेषामृषिरग्निः तत्रैव सिद्धत्वादत्र सङ्ख्यानोऽनुपानुगानादीनामनिर्देशादेव स्वर्याणां त्रित्वं सिध्यति । भ्राजादौ निर्देशादेव व्रतशुक्रियाणां षट्त्वं सिध्यति । महानाम्नीनामिव नामानि महामानयः सिमाः शक्यो मद्धिरिनि षोडशिननामानि तव श्राव्यंजेषु सामसु भेषजमिति व्याहृतिसामानि सप्तदश । ऋतेऽपि सङ्ख्यावचनं व्याहृतिसाम्नामियत्तापरिच्छेदः सुशकइति कृत्वा सङ्ख्या नोक्ता । कथमिति चेत् गायत्रेण परिनिष्ठितो मन्त्रगणः यानि तवश्या व्याकराणि गायत्रादर्वाञ्चि सप्तदश सामानि तानि व्याहृतिसामानीति विद्यादिति ऋषिर्गायत्रस्य प्रजापतिगायत्रेण परिनिष्ठितो मन्त्रगणः ।

व्याख्यानमिदमाख्यानमार्षेयस्य यथामति ।
ग्रन्थमानमिह प्रोक्तं चत्वारिंशच्छतं मया ॥

अग्निष्टोमाद्यनेकश्रुतिमपि विधिवज्जैमिनिर्यज्ञतन्त्रं
व्याचख्यावल्पशेषं मठरकुलपतिः श्रीभवत्राननामा ।
जामाता भागिनेयः प्रतिविततयशास्तस्य शिष्योनुकूलो
भारद्वाजो जयन्तो व्यरचयमनया व्याख्ययोक्तावशेषम् ॥

सूत्रं गृह्यं वैकृतं स्तोमसंज्ञं पर्याध्यायाद्यानुवाकत्रयं च ।
पश्यादन्यां निष्टुतीनां च क्लृप्तिः भावत्राती भूषयामास वृत्तिः ॥

पूर्वाध्यायावशेषं यदार्षेयं प्रकृत च यत् ।
परिहारविधिर्यश्च जायन्ती तत्र वर्तिता ॥

यस्य व्याख्यावसिता तस्मै जैमिनये नमः ॥

R. No. **5508.**

Paper. $10\frac{1}{2} \times 9\frac{3}{4}$ inches. Foll. 87. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1930–31 from a MS. obtained from Dr C. Kunhan Rajah. Adyar, Madras.

**ऋग्वेदानुक्रमणिका, सव्याख्या.**

ṚGVĒDĀNUKRAMAṆIKĀ WITH COMMENTARY.

Foll 1a—86b. Fol. 87 is left blank.

Same text as that described under No. 889 of the D.C.S. MSS., Vol. II, with a commentary by Vāsudēva.

Contains the Maṇḍalas 1 to 10 complete.

**Beginning :**

स्तोतृणामतिशयेन स्तोता । यस्माच्चास्माकीनाः स्तोतारः प्रस्तुवति प्रयनेत । यस्मादग्ने तव स्तोतारः प्रजायते पश्वतमाः स्तोतारः सन्तः प्रजायते प्रयनगो यस्मादग्ने भानवः संमतः प्रयन्ति बलवतः त्वं हि सर्वतोमुखः सर्वतः परिभवसि द्विषो नः शत्रून् अस्मान् सर्वतोमुख नावपतिपारय । स नः सिन्धुं सः अस्मन्नभीभिवना पाति पारय ।

* * * *

इति द्वादशकाण्डी तु परिभाषा प्रवर्णिता ।

अग्निं नव मधुच्छन्दा वैश्वामित्रः । अग्निमिति सूक्तादि । नवेति सूक्तस्य ऋक्सङ्ख्या । मधुच्छन्दा इति ऋषेर्नाम । वैश्वामित्र इति तस्य गोत्रे । अग्निमीळे । विश्वामित्रपुत्रो मधुच्छन्दा ऋषिः गायत्री छन्दः अग्निर्देवता । अग्निः पूर्वेभिरित्येकोनत्वात् निचृत् गायत्री ।

* * * *

**Colophon :**

इति वासुदेवीये प्रथमं मण्डलं समाप्तम् ।

**End :**

मं संचतुष्कं संवननः संज्ञानम् । आद्याग्नेयी तृतीया त्रिष्टुप् । तृतीया त्रिष्टुप् । नमः शौनकाय नमः शौनकाय सं समिद्युवसः आङ्गिरसस्संवनन. ऋषिः समानो मन्त्र इति त्रिष्टुप् । शिष्टा अनुष्टुभः संज्ञानं

देवता संस इत्यस्या अग्निः । द्विरुक्तिः ग्रन्थसमाप्त्यर्था । तत्कृतग्रन्थमूलत्वात् अस्य । वररुचिः शौनकं नमस्करोति---नमः शौनकायेति ।

अत्युक्तान्यन्यथोक्तानि यान्यनुक्तानि वा मया ।
ऋषिच्छन्दोदैवतानि तानि शोध्यानि सूरिभिः ॥

**Colophon:**

समाप्तं वासुदेवीयम् ।

---

## R. No. 5509.

Paper. 10¾ × 9¾ inches. Foll. 112 Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1930–31 from a Library MS. described under R. No. 3150.

### सङ्कल्पसूर्योदयव्याख्यानम्.
### SAṄKALPASŪRYŌDAYAVYĀKHYĀNAM.

Foll. 1*a*—111*b*. Fol. 112 is left blank.

Same work as that described under R. No. 3150 ante; by Śrībhāṣya Nārāyaṇasūri.

Contains 2—7 Aṅkas complete.

---

## R. No. 5510.

Paper. 11 × 9½ inches. Foll. 172. Lines, 20 in a page Dēvanāgarī, Good.

Restored in 1930–31 from a Library MS. described under R. No. 4516.

### सङ्गीतसूर्योदयः.
### SAṄGĪTASŪRYŌDAYAḤ

Same work as that described under R. No. 4516 ante.

By Lakṣmīnārāyaṇa, son of Bhaṇḍāri Viṭṭhalēśvara.

Complete in 5 Adhyāyas.

---

## R. No. 5511.

Paper. 10¾ × 9¾ inches. Foll. 68. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1930–31 from a Library MS described under R. No. 3866.

महाभाष्यप्रदीपविवरणम् (लघु).

MAHĀBHĀṢYAPRADĪPAVIVARAṆAM : (LAGHU).

Foll. 1*a*—67*a*. Foll 67*b*—68 are left blank.

Same work as that described under R. No. 3866(*b*) ante.

By Rāmacandrasarasvatī.

Incomplete

---

R. No. **5512.**

Paper. 10¾ × 9½ inches. Foll. 40. Lines, 20 in a page. Dēvanagarī. Good.

Restored in 1930–31 from a Library MS. described under **R. No.** 4267.

गृह्यपरिशिष्टम्.

GṚHYAPARIŚIṢṬAM.

Foll 1*a*—39*b*. Fol. 40 is left blank.

Same work as that described under R. No. 4267 ante.

Contains the Prapāṭhakas 1 and 2 complete ; but wants the beginning of the 1st Prapāṭhaka.

---

R. No. **5513.**

**Paper.** 10½ × 9¾ inches. Foll. **66.** Lines, 20 in a page. Dēvanagarī. Good.

Restored in 1930–31 from a Library MS. described under Des. No 12351.

विबुधानन्दप्रबन्धः.

VIBUDHĀNANDAPRABANDHAḤ

Foll. 1*a*—65*b*. Fol. 66 is left blank.

Same work as that described under No. 12351 of the D.C.S. MSS., Vol. XXI ; by Vēṅkaṭakavi, son of Vēṅkaṭavīrarāghava.

Complete.

---

R. No. **5514.**

Paper. 10¾ × 9½ inches. Foll. 68. Lines, 20 in a page. Dēvanagarī Good.

Restored in 1930–31 from a Library MS. described under **R. No.** 3866.

महाभाष्यप्रदीपविवरणम्—(बृहत्).

MAHĀBHĀṢYAPRADĪPAVIVARAṆAM: (BṚHAT).

Foll. 1*a*—67*b*. Fol. 68 is left blank.

Same work as that described under R No 386 (*a*) ante.

By Rāmacandrasarasvatī.

Incomplete.

---

## R. No. 5515.

Paper. 10¾ × 9¾ inches. Foll. 72. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1930-31 from a Library MS. described under Des. No. 13028.

सङ्गीतसमयसारः.

SAṄGĪTASAMAYASĀRAḤ.

Foll. 1*a*—71*a*. Fol 72*b* is left blank.

Same work as that described under No. 13028 of the D.C.S. MSS., Vol. XXII; by Pārśvadēva also called Saṅgītākara, son of Ādidēva.

Breaks off in the 10th Adhikarana.

---

## R. No. 5516.

Paper. 10¾ × 9¾ inches. Foll. 40. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1930-31 from a Library MS. described under Des. No. 12744.

कृष्णविजयम्.

KṚṢṆAVIJAYAM.

Foll. 1*a*—39*b*. Fol. 40 is left blank.

Same work as that described under No. 12744 of the D.C.S. MSS., Vol. XXI.

By Vēṅkaṭavarada, son of Appalācārya of Vīravalli family.

Breaks off in the 5th chapter.

---

## R. No. 5517.

Paper. 10¾ × 9¾ inches. Foll. 108. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1930-31 from a Library MS. described under R. No. 5033.

गौतमीयपितृमेधसूत्रव्याख्यानम्.

GAUTAMĪYAPITṚMEDHASŪTRAVYĀKHYĀNAM.

Foll. 1*a*—107*a* Foll. 107*b*—108 are left blank.

Same work as that described under R. No. 5033(*a*, ante.

By Anantayajvan, son of Kṛṣṇabhaṭṭa.

Complete.

R. No. **5518.**

Paper. 10¾ × 9¾ inches. Foll. 92. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1930–31 from a Library MS. described under R. No. 3948.

मीमांसाभाष्यविवरणव्याख्यानम्.

MĪMĀṀSĀBHĀṢYAVIVARAṆAVYĀKHYĀNAM.

Foll. 1*a*—90*a*. Foll. 90*b*—92 are left blank.

Same work as that described under R. No. 3948(*a*) ante.

Wants the beginning and the end in the 4th Pāda of the 1st Adhyāya.

R. No. **5519.**

Paper. 10¾ × 9¾ inches. Foll. 162. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1930–31 from Library MS. described under R. No. 5079.

पराशरधर्मशास्त्रव्याख्यानम्—लघुहितधर्मः.

PARĀŚARADHARMAŚĀSTRAVYAKHYĀNAM: LAGHUHITADHARMAḤ.

Foll. 1*a*—160*a*, Foll. 160*b*—162 are left blank.

Same work as that described under R. No. 5079 ante.

By Kāmēśa.

Begins in the 38th Ślōka in the 1st Adhyāya and breaks loff in the 79th Ślōka in the 12th Adhyāya.

R. No. **5520.**

Paper. 10¾ × 9¾ inches Foll. 24. Lines, 20 in a page. Dēvanāgarī. Good

Restored in 1930–31 from a Library MS. described under R. No. 5092.

शिवभक्तानन्दनाटकम्.
ŚIVABHAKTĀNANDANĀṬAKAM.

Foll. 1*a*—23*b*. Fol. 24 is left blank.

Same work as that described under R. No. 5092 ante.

By Rakṣānātha, son of Janārdana.

Complete.

R. No. **5521.**

Paper. $10\frac{3}{4} \times 9\frac{3}{4}$ inches. Foll. 89. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1930–31 from a Library MS. described under R. No. 4278.

शिवनामकल्पवल्ल्यालवालम्, सुधापूरसहितम्.
ŚIVANĀMAKALPAVALLYĀLAVĀLAM WITH SUDHĀPŪRA.

Foll. 1*a*—89*a*. Fol. 89*b* is left blank.

Same work as that described under R. No. 4278 ante.

The text is by Bhāskararāya, son of Ghambhīrarāyabhāratīdīkṣita, disciple of Bālagōpālēndrayati. The work is followed by a commentary by Vēṅkaṭapati who wrote the commentary to please one Kāśipati. The text is also called Ratnālavāla and the commentary Sudhāpūra.

Complete.

R. No. **5522.**

Paper. $10\frac{3}{4} \times 9\frac{3}{4}$ inches. Foll. 76. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1930–31 from a Library MS. described under Des. No. 4525.

तत्त्वविवेकव्याख्या—तत्त्वविवेकदीपनम्.
TATTVAVIVĒKAVYĀKHYĀ : TATTVAVIVĒKADĪPANAM.

Same work as that described under No. 4525 of the D.C.S. MSS., Vol. IX ; by Nṛsiṁhāśrama.

R. No. **5523.**

Paper. $10\frac{3}{4} \times 9\frac{3}{4}$ inches. Foll. 68. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1930–31 from a Library MS. described under R. No. 5111.

वादार्थमाला.

VĀDARTHAMĀLĀ.

Foll. 1*a*—67*b* Fol. 68 is left blank.

Same work as that described under R. No. 5111 ante.

By Campakēśācārya, son and disciple of Varadācārya of Kauśika-gōtra.

Contains Vādas 1 to 10 complete.

---

R. No. **5524.**

Paper. 10¾ × 9¾ inches. Foll. 112. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1930-31 from a Library MS. described under R. No. 5093.

सिद्धान्तकौमुदीव्याख्या— सुखबोधिनी

SIDDHĀNTAKAUMUDĪVYĀKHYĀ : SUKHABÔDHINĪ.

Foll. 1*a*—107*a*. Foll. 109*b*—112 are left blank.

Same work as that described under R. No. 5093 ante

By Nīlakaṇṭhavājapēyin, son of Paramēśvara.

Breaks off in the Sandhiprakaraṇa.

---

R. No. **5525.**

Paper. 10¾ × 9¾ inches. Foll. 16. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1930-31 from a Library MS. described under R. No. 5090.

पुरुषसूक्तभाष्यम्.

PURUṢASŪKTABHĀṢYAM

Foll. 1*a*—15*a*. Foll. 15*b*—16 are left blank.

Same work as that described under R. 5090(*a*) ante.

By Śrīraṅganātha of Gautamagōtra.

Complete.

---

R. No. **5526.**

Paper. 10⅝ × 9⅝ inches. Foll. 16. Lines, 20 in a page. Dēvangarī. Good.

Restored in 1930-31 from a Library MS. described under Des. No. 12463.

अनुमितिपरिणयम्.

ANUMITIPARIṆAYAM.

Same work as that described under No. 12463 of the D.C.S. MSS., Vol. XXI. By Nṛsimhakavi, son of Vēṅkaṭakṛṣṇa.

Incomplete.

---

R. No. **5527.**

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 118. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1930–31 from a Library MS. described under Des. No. 4524.

अद्वैतरत्नम् – (अभेदरत्नम्).

ADVAITARATNAM: (ABHĒDARATNAM).

Foll. 1*a*—116*a*. Foll 116*b*—118 are left blank.

Same work as that described under No. 4524 of the D.C.S. MSS., Vol. IX. By Mallanārādhya of Kōṭīśavaṁśa.

Complete.

---

R. No. **5528.**

Paper. $10\frac{3}{4} \times 9\frac{3}{4}$ inches. Foll. 4. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1930–31 from a Library MS. described under R. No. 5087.

लक्ष्मीस्तुतिः.

LAKṢMĪSTUTIḤ.

Foll. 1*a*—4*a* Fol. 4*b* is left blank.

Same work as that described under R. No 5087 ante.

Wants the beginning and end.

---

R. No. **5529.**

Paper. $10\frac{3}{4} \times 9\frac{3}{4}$ inches. Foll. 136. Lines, 20 in a page. Dēvanāgarī and Kanarese. Good.

Restored in 1930–31 from a Library MS. described under Des. No. 5113.

शिवाद्वैतम्.

ŚIVĀDVAITAM.

Same work as that described under No. 5113 of the D.C.S. MSS, Vol. X

Contains 1 to 6 Paṭalas complete and 7th incomplete.

---

R. No. **5530.**

Paper. 10¾ × 9¾ inches. Foll. 112. Lines, 20 in a page. **Dēvanāgarī.** Good.

Restored in 1930–31 from a Library MS.

सङ्गीतगङ्गाधरः, श्रवणानन्दिनीव्याख्यासहितः.

SAṄGĪTAGAṄGĀDHARAḤ WITH THE COMMENTARY ŚRAVAṆĀNANDINĪ.

Foll. 1*a*—110*a*. Foll. 110*b*—112 are left blank.

The text is by Nañjarāja and the commentary is by Kāśipatipaṇḍita.

Same work as that described under R. No. 4286(*b*) ante.

Breaks off in the 5th Sarga.

**Beginning:**

वन्दे वन्दारुमन्दारमिन्दुचूडस्य नन्दनम् ।
अमन्दानन्दसन्दोहबन्धुरं सिन्धुराननम् ॥
श्रीहर्षप्रदया कटाक्षसुधया सानन्दमुत्पादिताः
सद्यो मन्मथकोटयो धुरि यया जेतुर्मनोजन्मनः ।
सा गौरी परदेवता स च शिवो देवो महांस्तावुभौ
विश्वानन्दविधायिनौ वितरतां श्रेयांसि भूयांसि नः ॥
श्रीमत्परमहंसेन्द्रकराम्बुरुहसंभवान् ।
महादेवेन्द्रयोगीन्द्रपूज्यपादानहं भजे ॥
प्रौढस्याप्रतिमस्य विश्रुतमहीशूरस्य विद्वत्प्रभोः
श्रीमत्कृष्णमहीभुजो नरपतेर्विद्वत्प्रधानाग्रणीः ।
श्रीनञ्जक्षितिपालकेन रचितं सङ्गीतगङ्गाधरं
तत्प्रीत्यै तदुदीरितो विवृणुते काशीपतिः पण्डितः ॥

**End:**

कुचावचलकर्कशौ सुतनुते कटाक्षाः सिता
निसर्गकुटिलाः कचाः सहज एव सोऽयं क्रमः ।

विषादकलुषीकृते मयि चिराय कोपोदया-
दहो वहसि मानसे वितयमेतदद्य प्रिये ॥
हे सुतनु ते तव कुचौ अचलवत् कर्कशौ कठिनौ

---

## R. No. 5531.

Paper. 10½ × 9¾ inches. Foll. 4. Lines, 20 in a page. Dvanāgarī. Good.

Restored in 1930–31 from a Library MS.

### सदाशिवमहारायताम्रशासनम्.

### SADĀŚIVAMAHĀRĀYATĀMRAŚĀSANAM.

A copy of a copper plate inscription of Sadāśivarāya, one of the kings of Vijayanagar. The grant of villages Kuśappattu and Pūdēri, to a follower of Rāmānuja is mentioned herein.

Incomplete.

**Beginning :**

नमस्तुङ्गशिरश्च्युम्बिचन्द्रचामरचारवे ।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे ॥

हरेर्लीलावराहस्य दंष्ट्रादण्डः स पातु वः ।
हेमाद्रिकलशो यत्र यात्राच्छत्रश्रियं दधौ ॥

कल्याणायास्तु तद्धाम प्रत्यूहतिमिरापहम् ।
यद्गजोऽप्यगजोद्भूतं हरिणापि च पूज्यते ॥

अस्ति क्षीरमयं देवैर्मथ्यमानं महाम्बुधेः ।
नवनीतमिवोद्भूतमपनीततमो महः ॥

तस्यासीत्तनयस्तपोभिरतुलैरन्वर्थनामा बुधः
पुण्यैरस्य पुरूरवा भुजबलैरायुर्द्विषां निघ्नतः ।
तस्यायुर्नहुषोऽस्य तस्य पुरुषो युद्धे ययातिः क्षितौ
ख्यातस्तस्य च तुर्वसुर्वसुनिभः श्रीदेवयानीपतेः ॥

तद्वंशे देवकीजानि . दिलीपेति भूपतिः ।
यशः श्रीमनुजेन्द्रोऽभद्यदोः कृष्ण इवानु ये ॥

ततोऽभूत् बुक्कमाजानिरीश्वरः क्षितिपालकः ।
अत्रासमगुणावेशं मौलिरत्नं महीभुजाम् ॥
सरसादुदभूत्तस्मान्नरसावनिपालकः ।
देवकीनन्दनात्कामो देवकीनन्दनादिव ॥

* * * *

ततोऽप्यवार्यविश्वश्रीः कृष्णरायमहीपतिः ।
बिभर्ति मणिकर्पूरनिर्विशेषमहीभुजे ॥

* * * *

श्रीविद्यानगरीललामनिवहम्साम्राज्यसिंहासने
सन्तानद्रु . . . . न् घनगिरौ संहृत्य विद्वेषिणः ।
आ सेतोरपि चाहिमाद्रिमचलान् राज्ञो निजाज्ञाकरान्
सर्वं पालयते सदाशिवमहारायश्रिराय क्षमाम् ॥

* * * *

कुमा . . . न्धीन्दुगणिते शकवत्सरे ।
नलसंवत्सरे मासि मार्गशीर्षे इतीरिते ॥
सूर्योपरागेऽमावास्यातिथौ मार्तण्डवासरे ।
तुङ्गभद्रानदीतीरे विट्ठलेश्वरसन्निधौ ॥
प्रपेदुषे वेदमार्गप्रतिष्ठाचार्यवर्यताम् ।
तादृक्श्वेतशिखासारद्राविडागमवेदिने ॥
ष . . . . सिद्धान्तस्थापनाचार्यमौलये ।

* * * *

रामानुजमुनीन्द्राय रामाराधनचेतसे ।
जगत्ख्यातजयङ्गोण्डचोलमण्डलवासिने ॥

**End :**

कुशप्पट्टग्रामकं च पूतेरिग्राममप्यमुम् ।
पल्लत्ताचेरि नाम्नोऽपि सीमान्ताद्ग्रामकादपि ॥
तत्तन्मडविलाहस्य क्षेत्रात्प्राचीं दिशं स्थितम् ।
ग्रामात्कुण्डं वेरुम्बेडुनामकादपि दक्षिणम् ॥

R. No. **5532**.

**Paper.** 10½ × 9¾ inches. **Foll.** 100. Lines, 20 in a page. Dēvanagarī. Good.

Transcribed in 1930–31 from a MS received from the India Office Library, London.

**रसतरङ्गिणीव्याख्या — रसिकरञ्जनी.**

RASATARAṄGIṆĪVYĀKHYA : RASIKARAÑJANĪ.

Foll. 1*a*—100*a*. Fol. 100*b* is left blank.

Same work as that described under No. 12932 of the D.C.S. MSS., Vol. XXII.

By Vēṇīdatta.

The scribe adds :—

> वेदर्ष्यर्षीन्दुगणिते वत्सरेऽर्जुनमासके ।
> त्रयोदश्यां रवौ पूर्णा टीका रसिकरञ्जनी ।।

---

# GENERAL INDEX